योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 276 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 31 जुलाई 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

## सुभाषितम्

शतेषु जायते शूरः सहस्रेषु
च पण्डितः।
वक्ता दशसहस्रेषु दाता
भवति वा न वा॥

अर्थ – सौ लोगों में से एक शूरवीर होता है। हजार लोगों में एक विद्वान होता है। दस हजार लोगों में एक अच्छा वक्ता होता है। वही लाखों में बस एक ही दानी होता है।

6700सङ्ख्यकाः बालचिकित्सायाः सघनसंरक्षण-शय्याः

# चिकित्सामहाविद्यालयेषु अगस्तमासस्य पञ्चदशदिनांकपर्यन्तं सिद्धाः भविष्यन्ति

**प्रदेश सर्वकारेण वितरिताः पञ्चत्रिंशतलक्षाधिकाः औषधि सामग्री-स्यूताः अष्टसहस्राधिकानां पराचिकित्सा कर्मचारिणां कृतः कौशलविकासः**



**लखनऊ।** कोरोणा सङ्क्रमणस्य तृतीय लहर्या योद्धुं प्रदेश सर्वकारस्य सिद्धताभिः गतिः गृहीता । विशेषज्ञः कोरोणा सङ्क्रमणस्य तृतीय लहरीं बालेभ्यः सङ्कटमयं कथयन्ति । एतस्मिन् बालेभ्यः सम्यक् चिकित्सां प्रदातुं सर्वकारः प्रत्येक स्मिन् जनपदे स्थितेषु चिकित्सामहा विद्यालयेषु बालचिकित्सा सघन संरक्षण इकाई वायवीय सघन संरक्षण इकाई च सज्जी कार्यते। अगस्त मासस्य पञ्चदश दिनांकार्यन्तं चिकित्सा महाविद्यालयेषु 6700सङ्ख्यकाः बालचिकित्सा सघन संरक्षण इकाई वायवीय सघन संरक्षण इकाई सिद्धा भविष्यन्ति यद्यपि 6500सङ्ख्यकाः शय्याः सिद्धाः अभवन। एतत् अतिरिच्य पर्यवेक्षण समूहाय इतोऽपि दृढीकर्तुं कार्यं क्रियत।

### बालानां पञ्चत्रिंशल्लक्ष संख्यकानां सामग्रीस्यूताः प्रेषिताः



प्रदेशसर्वकारेण द्विसप्तत्यधिकपर्यवेक्षणसमितीनां माध्यमेन अष्टादशवर्षतः न्यून-आयुपर्यन्तेभ्यः युवभ्यः औषधिसामग्रीस्यूतानां वितरणं क्रियते । सर्वकारपक्षतः अधुना पर्यन्तं पञ्चत्रिंशल्लक्षानाम् औषधिसामग्रीस्यूतानां वितरणं कृतम् । एषः औषधिसामग्रीस्यूतः पर्यवेक्षणसमीतिमाध्यमेन अष्टादशवर्षतः न्यूनायुवद्भ्यः कोरोणालक्षणयुक्तबालेभ्यः दीयते । औषधिनिमित्तेषु चतुर्षु वर्गेषु (0-1 वर्ष, 1-5 वर्षीयाः, 5-12 वर्षीयाः तथा 12-18 वर्षीयाः) विभज्य सामग्रीस्यूतः । जन्मना एकवर्षपर्यन्तेभ्यः बालेभ्यः पैरासिटामॉलड्राप, मल्टीविटामिनड्राप ओआरएस इत्यस्य पैकेट च, एकवर्षारभ्य पञ्चवर्षीयानां बालानां सामग्रीस्यूते पैरासिटामॉलसीरप, मल्टीविटामिनसीरप ओआरएस इत्यस्य पैकेट च भविष्यति। पञ्चवर्षारभ्य द्वादशवर्षीयेभ्यः जनेभ्यः पैरासिटामॉल, मल्टीविटामिन टैबलेट, ओआरएस इत्यस्य पैकेट इत्यनेन सह आइवरमेक्टिन षड्मिलीग्राममितम् अपि प्रदास्यते। एतत् दिनत्रयं स्वीकरणीयं भविष्यति।

### प्रदेशसर्वकारेण कोरोणा सङ्क्रमणस्य तृतीय लहरीतः रक्षणाय बालेभ्यः विशेष प्रकारकं



बाल चिकित्सा सघन संरक्षण- इकाई सज्जी क्रियते । अत्र बालेभ्यः उत्तम चिकित्सायाः व्यवस्था कारिता । सर्वासु शय्यासु वायुप्रवाहकस्य व्यवस्था कृता । प्रदेशे राजकीय चिकित्सा महाविद्यालयेषु अधुना पर्यन्तं 6500सङ्ख्यकाः बालचिकित्सा सघन संरक्षण इकाई शय्याः सिद्धाः । अगस्त मासस्य पञ्चदशदिनांकपर्यन्तं 6700सङ्ख्यकाः शय्याः सिद्धाः भविष्यन्ति । चिकित्सालयेषु बालेभ्यः निर्मीयमान विभागेषु गृहमिव वातावरणं प्रदातुम् अन्तस्थासु भित्तिषु व्यङ्गचित्राणि निर्मीयन्ते । बालेभ्यः क्रीडावस्तूनां, चित्र पुस्तकादीनां च व्यवस्था कृता ।

### चिकित्सकेभ्यः पराचिकित्सका कर्मचारिभ्यः प्रशिक्षणम्



प्रदेशसर्वकारपक्षतः चिकित्सकेभ्यः पराचिकित्सा कर्मचारिभ्यः कोरोणा सङ्क्रमणस्य तृतीय लहर्या सह योद्धुं विशेष प्रशिक्षणं दीयते । सर्वकारेण अधुना पर्यन्तं 4600सङ्ख्यकेभ्यः चिकित्सकेभ्यः विशेष प्रशिक्षणं प्रदत्तम् । एतत् अतिरिच्य चिकित्सा विद्यालयेषु नियोजितानां 8653सङ्ख्यकानां पराचिकित्सा कर्मचारिणाम् अस्मिन् वार्ड परिचरानाम्, उपचारिकानां, तन्त्रज्ञानां चेत्यादिनां कौशल विकासस्य कार्यं क्रियते । तत्रैव प्रदेशे तृतीलहरीम् उद्दिश्य 548सङ्ख्यकानि प्राणवायु संयन्त्राणि अपि स्थाप्यन्ते । एतेषु 239सङ्ख्यकानि प्राणवायोः संयन्त्राणि आरब्धानि अपि सन्ति ।

## संक्षिप्तवार्ताः

### वयोधिकेषु कोविड् प्रतिरोधक्षमतायुक्तांशः न्यूनः इति अध्ययनफलम्

**नवदेहली।** वयोधिकेषु जनेषु कोविड् 19 वैराणुं प्रतिरोद्धुं क्षमतायुक्तांशः न्यूनः इति 'ओरिगण् हेल्त् आन्ट् सयन्स' विश्वविद्यालयस्यवैज्ञानिकैः कृताध्ययनात् अवगम्यते। प्रतिरोधसूच्यौषधं स्वीकृते अपि तेषां वृद्धानां स्थितिः न सुरक्षिता इति एते अभिप्रयन्ति। अमेरिकायाःवैद्यसंघातस्य पत्रिकायाम् प्रतिवेदनमिदं प्रकाशितं वर्तते। फैस 'वाक्सिनस्य द्वितीयमात्रां स्वीकृत्य सप्ताहद्वयम् अतीतेषु 50 जनेषु आसीत् अध्यनम्। जना वयोभेदानुसारं श्रेणीकृत्य एव अध्ययनं प्रचालितम्। वृद्धान अपेक्षया युवकेषु सप्तगुणितः प्रतिरोध क्षमतांशः अस्ति इति अध्ययनप्रतिवेदनेन स्फुटीक्रियते।

# चतुर्विंशतिहोरासु षड्सहस्त्राधिक दशलक्षमिताद् अधिकजनैः प्राप्तं सूच्यौषधम्

**लखनऊ।** वैश्विक महामारी कोरोणा सङ्क्रमणस्य निरन्तरं उत्तरप्रदेशे न्यूना भवति । प्रदेशस्य सम्यक्जातायां स्थित्यां मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य कोविडप्रबन्धनस्य वृहद् भूमिका अवर्तत । रोगान् समापयितुं कृतानां कार्याणां सकारात्मकः परिणामः सम्मुखे आगतः । यस्य प्रतिफलम् अस्ति यत् बलरामपुर–बस्ती–एटा–हाथरस–महोबा–श्रावस्ती–चेत्यादिषु जनपदेषु एकः अपि कोरोणासङ्क्रान्तः अवशिष्टः नाभवत् । एते जनपदाः कोरोणामुक्ताः अभवन् । अत्र सर्वे सङ्क्रान्ताः उपचारानन्तरं स्वस्थाः अभवन् । उत्तरप्रदेशेन एकस्मिन् दिवसे कोविडसङ्क्रमणात् रक्षणाय सर्वतोऽधिकस्य सूच्यौषधीकरणस्य पुनः नूतनं कीर्तिमानं निर्मितम् । गतचतुर्विंशतिहोरासु प्रदेशे षड्सहस्त्रदशलक्षमिताधिकाः जनाः सूच्यौषधं प्राप्तवन्तः । अस्मिन् काले आहत्य 1006068सङ्ख्यकेभ्यः जनेभ्यः सूच्यौषधं दत्तम् । अधुना पर्यन्तम् एकाधिक द्विशत द्वाविंशतिसहस्राष्टत्रिंशल्लक्षचतुकोट्यधिकेभ्यः जनेभ्यः सूच्यौषधं प्रदत्तम् । प्रदेशे सञ्चाल्यमानेन



सूच्यौषधिकरणाभियानकारणेन प्रदेशस्य एकचत्वारिंशज्जनपदेषु एकसङ्ख्यात्मकङ्केषु कोविडसङ्क्रान्ताः एव अवशिष्टाः ।

### एकस्मिन् दिवसे अद्य पर्यन्तं सर्वतोऽधिकस्य सूच्यौषधिकरणस्य उत्तरप्रदेशे निर्मितं नूतनं कीर्तिमानम्



**उत्तमा भवति प्रदेशस्य स्थितिः, एकचत्वारिंशज्जनपदेषु एकसङ्ख्यात्मकङ्केषु कोविडसङ्क्रान्ताः एव अवशिष्टाः**

## कश्मिंश्चिज्जनपदे प्राप्ताः द्विसङ्ख्यात्मज्ञः कोरोणा सङ्क्रमणस्य नूतनसङ्क्रान्ताः



उत्तरप्रदेशे आक्रामकपरीक्षणे, सूक्ष्मनियन्त्रणक्षेत्रे, ग्रामे पर्यवेक्षणसमीतिनां सूक्ष्मप्रबन्धनेन उपचारेण च कोरोणासङ्क्रमणं नियन्त्रितम् । प्रदेशस्य स्थितिः निरन्तरं सम्यक् भवति । स्वास्थ्यविभागानां समूहाः सूच्यौषधिकरणे कोविडपरीक्षणे च व्यस्ताः सन्ति । यस्य परिमाणेन गतदिवसेषु 2,55,147सङ्ख्यकानां प्रतिरूपाणां परीक्षणम् अभवत् अपि च केवलं द्विचत्वारिंशत्सङ्ख्यकेषु प्रतिरूपेषु कोविडसङ्क्रमणस्य पुष्टिः कृता । यद्यपि सकारात्मकप्रतिशतं 0.02मितम् अभवत् । अस्याम् अवधौ नवनवतिसङ्क्रान्ताः स्वस्थीभूय चिकित्सालयमुक्ताः अभवन् । कश्मिंश्चित् जनपदे द्विसङ्ख्यात्मकाः कोरोणासङ्क्रमणस्य नूतनसङ्क्रान्ताः न प्राप्ताः ।

## पञ्चविंशतिकोटिनां जनसङ्ख्यामाने उत्तरप्रदेशे केवलं 932सङ्ख्यकाः सक्रियसङ्क्रान्ताः आगताः सम्मुखे

उत्तरप्रदेशे मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य आक्रामक-रणनीत्याः कोरोणासङ्क्रमणं नियन्त्रणे आगतम् । उत्तरप्रदेशादर्शस्य संरेखणेन, परीक्षणेन, उपचारेण सह आङ्शिक कोरोणानिषेधस्य सूच्यौषधीकरणस्य च परिणामः अस्ति यत् पञ्चविंशतिकोटिमितजनसङ्ख्याके उत्तरप्रदेशे केवलं 932सङ्ख्यकाः सक्रियसङ्क्रान्ताः सम्मुखे आगताः। प्रदेशे कोरोणासङ्क्रमणस्य स्वास्थ्यलाभान्वितप्रतिशतं 98.6% अभवत् । अधुनापर्यन्तं 16,84,471सङ्ख्यकाः प्रदेशवासिनः कोरोणा सङ्क्रमणात् मुक्तः भूत्वा स्वस्थाः अभवन् । प्रदेशे अधुना 6,37,99,832सङ्ख्यकानां प्रतिरूपाणां कोविड परीक्षणम् अभवत् ।

# समयेन योजनानां क्रियान्वयनस्य प्रथम प्राथमिकता भवितव्याः -अरविन्द चौहान

### महाकुम्भस्य पूर्वे प्रयागराजः सर्वसुविधायुक्तो भविष्यति



आगामिकुम्भमेला यावत् प्रयागराजनगरं सम्पूर्णरूपेण सुसज्जितं सुव्यवस्थितं च भविष्यति

**प्रयागराजः। वार्ताहरः।** प्रयागराजस्य 'विकास प्राधिकरण' इति विभागस्य उपाध्यक्षः कर्तव्यनिष्ठः श्रीमान् अरविन्द कुमार चौहान महोदयः कथितवान्, समयेन योजनानां क्रियान्वयनं प्रति तस्य प्रथमो वरीयता वर्तते। तेन कथितम्, प्रयागराजनगरं सर्वसुविधायुक्तं कारयितुं दिशायां सः सार्थकप्रयासं करिष्यति। '2015 ' इति वर्षस्य आई0ए0एस0 अधिकारी श्री चौहान महोदयः 'आह्निक वार्ता पत्रम्' इति संस्कृत समाचार पत्रस्य प्रधान सम्पादकेन सह विशेषवार्तालापमध्ये उक्तवान्, आगामिकुम्भमेला यावत् प्रयागराजनगरं सम्पूर्णरूपेण सुसज्जतं सुव्यवस्थितं च भविष्यतीति तत्सार्थकं प्रयासं भविष्यति। अपि च विकास प्राधिकरणस्य यानि कार्याणि लम्बितानि सन्ति, तानि समयेन पूर्णानि भविष्यन्ति। श्रीमान् चौहान महोदय उक्तवान् 'स्मार्ट सिटी' इति नगरस्य परिकल्पनां साकारं कारायितुं कार्येषु शीघ्रता कारिष्यते।

प्रयागराजः सर्वनागरिकानां तथा आगन्तृजनानां तीर्थसेविनां च कृते सुचारुव्यवस्था भविष्यति। प्रयागराजे महाकुम्भ पुण्यावसरे अत्र जनानां कृते सर्वप्रकारेण सर्वसुविधाः सम्पूर्णमेलापकस्य क्षेत्रे भविष्यन्ति। प्रतिवर्ष कुम्भ मेलापके तथा महाकुम्भपर्वणि क्षेत्रियनागरिकानां कृतेऽपि सर्वसुविधाः प्राधिकरण विभागः कारिष्यति। श्री चौहान महोदयेन सह वार्तामध्ये तस्य कर्तव्यनिष्ठां सौम्यप्रकृतिं व्यवहारकुशलतां च अनुभय हृदये महती प्रसन्नता जाता?। एतादृशः अधिकारिणः समाजस्य कृते वरदानरूपे शोभन्ते। सर्वे जनाः तद्दृष्टौ समानाः सन्तीति संदृश्य जनाः प्रसन्नाः आसन्। सर्वेषां वार्तां श्रुत्वा तत्समाधनं कर्तुं एतादृशः कर्तव्यबोध परायणः अधिकारी धन्याः सन्तीति मन्ये।

## सम्पादकीयम्

# रूग्णवाहिका चालकानाम् कार्याबाधः संवेदना विहीनतायाः पराकाष्ठां प्रदर्शयन्ति

सम्प्रति प्रदेशे रूग्णवाहिका चालकानाम् कार्याबाधः प्रचलति। तेचालकाः कतिपयाः याचनाः पूरयितुं शासनस्य समक्षं याचना पत्रम् प्रस्तुत्य पूर्तिकाल पर्यन्तं अनिश्चितकालीनाय कार्याबाधे समुद्यताः सन्ति। रूग्णवाहिका चालकानां कार्याबाधेन समाजे स्थितिः असामान्या अभवत्। रूग्णानाम् परिजनाः येनकेन प्रकारेण रूग्णान् ई रिक्शा, त्रिच क्रिकया (ट्राली) अन्यैः वाहनैः चिकित्सार्थं चिकित्सालये आनयन्ति परिणामतः विलम्बेन उपचार समारम्भे सतिबहवः रूग्णाः मृत्युं गच्छन्ति, केचिच्च उपचाराभावेहि प्राणविहीनाः भवन्ति।

विचारणीयोऽयं यत् स्वस्वार्थ पूर्तयेस्वाभाविकीं मानवतां विहाय दृढ़तरं कार्याबाधं कुर्वन् संवेदना विहीनतायाः पराकाष्ठां प्रदर्शयन्ति। स्वास्थ्य सेवातु अहर्निशं सेवामहे इति सूत्र वाक्ये समाधृता सेवा वर्तते। जागृता वस्थायां, सुषुप्तावस्थायां अपि यदाकदापि 108, 112 अंकेसु अथवा आपात् आह्वानं भवतु मानवता रूपेण तत्र गत्वा रूग्णवाहिकया यथा शीघ्रं चिकित्सालये आनेतुं एवं एतासां रूग्णवाहिकानाम् उपादेयता अस्ति। चेत् ऐते चालकाः संवेदनविहीनः भूयः आपात् कालेऽपि सेवा कर्त्तुं न सहयोगं कुर्वन्ति तर्हि निश्चप्रचमेव एतेदण्ड्या अपराधिनः श्रेण्यां अवतिष्ठन्ते। एतेषां संवेदनहीनानां उपरितु हत्यायाः वादं प्रचाल्य त्वरितरूपेण दण्डस्य व्यवस्थाभवेत्।

निरपराध रूग्णानाम् प्राणान् विपत्यां प्रक्षेपकान् रूग्णवाहिका सेवायाः कर्मचारिणं प्रतिसंस्था दृढ़भावं प्रयुज्य 570 कार्याबाधे संलग्नानां रूग्णवाहिका चालकानाम् कर्मचारिणां चनिलम्बितवान्। स्वागत योग्यः निर्णयोऽयम्। सर्वकारमपि एतादृशानां कर्मचारिणां प्रतिकाऽपि सहानुभूतिः न प्रदर्शनीया अपितु दण्डस्य व्यवस्था करणीया।

# श्रवणकुमारस्य पितृ मातृ सेवा



असम राज्य भारत वर्षस्य प्रकाण्ड विद्वान पण्डित नारदोपाध्याय महाभागः



श्रवणकुमारः जात्या वैश्यः आसीत् । तस्य मातापितरौ अन्धौ आस्ताम् । सः अत्यन्तं सावधानतया श्रद्धया च पित्रोः सेवां करोति स्म, एवञ्च तयोः प्रत्येकमिच्छां पूरा-यितुं प्रचेष्टते स्म । कदाचित् तयोरेच्छा तीर्थभ्रमणाय जाता । तदा सः स्कन्धभारस्य साहाय्येन उभयतः तौ कण्डोलौ संस्थाप्य, स्वस्कन्धे वहन् च यात्रार्थं प्रस्थितवान् । ब्राह्मणस्य तु उपजीविकायाः आधारः हि भिक्षा, परन्तु अपरवर्णस्य कृते तीथर्यात्रासमये विना याचनां प्राप्तवस्तुभिः जीवननिर्वहणं कार्यम् । परन्तु श्रवणकुमारः वनं गत्वा ततः कन्द-मूल-फलादिकम् आनीय पितृभ्यां तद्दत्वा स्वयमपि भुङ्क्ते स्म । एवं यात्रां कुर्वन्तः ते अयोध्यासमीपस्थं वनं प्रविष्टवन्तः । तत्र रात्रौ तौ पि-पासाग्रस्तौ जातौ । तद्ववलोक्य जलम् आनेतुं श्रवणः पात्रं गृहीत्वा सरयूतीरं प्राप्नोत् ।

धर्ममर्यादा नाम युद्धादतिरिच्य गजहननं पापकर्म , अन्यच्च निश्चयतां विना केवलम् अनुमानाधारेण अस्त्राणां प्रयोगः निषेधः । महाराजः दशरथः तत्समये एकाकी हि आखेटार्थं वनं प्रस्थितवान् आसीत् । श्रवणकुमारः यदा स्वपात्रे जलं पूरयन् आसीत्, तेन यद्ध्वनिः निर्गतः, तद्विश्रुत्य दशरथः चिन्तितवान् यत् अयं कश्चन गजः जलं पिबन्नस्तीति । सहसा सः शब्दवेधिबाणं प्रयुङ्क्तवान् । दशरथस्य तत्कार्यं धर्मविरुद्धम् आसीत्, यत्पूर्वमुल्लिखितम् । तद्वाणः गत्वा कुमारस्य वक्षःस्थलं विद्धवान्, तेन असहमानः सः महान्तं चित्कारं कृतवान्, पात्रजलं अधः निपतितम्, तस्य शरीरं धूल्या रुधिरेण च आवृतं जातम् । तच्चित्कारं विश्रुत्य राजा शीघ्रं तम् उपसर्प्य, दृष्ट्वा च महान् व्याकुलः जातः । कुमारः तं राजानं दृष्ट्वा भग्नस्वरेण कथञ्चित् उक्तवान् - ' राजन् ! अहं भवतः न कमपि अपराधं कृतवान्, भवान् मां किमर्थम् अहनत् ? मम पितरौ दुर्बलौ अन्धौ च । तयोः कृते जलं नेतुमहमत्र आगतवान् आसम् । तौ मम प्रतीक्षारतौ स्तः इदानीम् । तौ कथं वा जानीतः यत् अहमत्र एवं पतितवान् अस्मीति । मयि मृत्युभयं नास्ति ; परन्तु मातापित्रोः दुःस्थितिविषयं चिन्तयन् नितरां दुःखी अस्मि । भवान् तत्र गत्वा एनां वार्तां ताभ्यां श्रावयतु, एवञ्च जलं पाययित्वा तयोः पि-पासां दूरीकरोतु ' इति ।

महाराजः शोकेन अत्यन्तं व्याकुलः आसीत् । श्रवणः तस्मै पित्रोः सङ्केतं मार्गञ्च निर्दिश्य तमेवम् आश्वासितवान् - ' भवन्तं ब्रह्महत्या न बाधते, यतोहि अहम् अब्राह्मणः, वैश्योऽस्मि । परन्तु इयं बाणपीडा मां व्यथते, भवता स्वबाणः मे वक्षःस्थलतः निष्कास्यताम् ' इत्येवम् उक्त्वा सः स्वप्राणान् अत्यजत् ।

अथ दशरथः पश्चात्तापं कुर्वन् पात्रे जलं प्रपूर्य, तत् आदाय च श्रवणस्य पित्रोः समीपं प्राप्नोत् । सः तत्र तौ अवलोक्य दुःखपूर्णेन गद्गदकण्ठेन तद्घटितं सर्ववृत्तान्तं श्रावितवान्, स्वापराधञ्च निवेदितवान् । तच्छ्रुत्वा तौ दम्पती पुत्रशोकेन सहसा अत्यन्तं व्याकुलौ? म्रियमाणौ च जातौ । तौ क्रन्दन्तौ राजानम् उक्तवन्तौ - ' आवां पुत्रसमीपं नयतु ' इति । राजा तौ द्वावपि स्वस्कन्धयोः स्थापयित्वा तत्र मृतपुत्रसमीपं नीतवान् । तत्र संप्राप्य तत्समये राजा दृष्टवान् यत् पितृसेवायाः सत्फलकारणतः श्रवणकुमारः दिव्यरूपं धृत्वा विमाने उपविश्य च स्वर्गं प्रति प्रस्थातुं सज्जोऽस्तीति । गमनस-मये सः पितरौ उक्तवान् - ' भवतोः सेवाकारणतोऽहम् एनाम् उत्तमगतिं प्राप्तवानस्मि । भवन्तौ मत्कृते शोकं मा कुरुताम् । भवन्तौ अपि शीघ्रम् मत्पार्श्वम् आगमिष्यतः ' इति । तदनन्तरं शुष्ककाष्ठानि एकत्रीकृत्य तदुपरि श्रवणस्य मृतदेहं संस्थाप्य, तौ सरयूं प्रविश्य स्नात्वा, पुत्रनाम्ना जलाञ्जलिं प्रदाय च तस्यां चितायाम् अग्निं संयोज्य च तौ उभावपि तत्रैव प्रविष्टौ । गमनसमये राजानं तौ एवं शप्तवन्तौ - ' हे राजन् ! यथा पुत्रवियोगकारणतः आवां म्रियमाणौ स्वः, तथैव त्वमपि पुत्रवियोगतः हि मरिष्यसि ' इति । इत्थं प्रकारेण श्रवणकुमारः पित्रोः से-वां विधाय, सेवाधर्मप्रभावतः स्वस्य पित्रोश्च उद्धारं कृत-वान्, या सेवा च मानवमात्रस्य कृते सर्वदा आदरणीया, अनुकरणीया चास्तीति, शम् !

# ॥ शिवाष्टकं स्तोत्रम् ॥



**डा. शिवानी शर्मा, जयन्तीपुरम्, हरियाणाराज्यम्**

श्रीरामस्य सुदेवदेवभगवन् लोकस्य नाथशिवः
भक्तानां प्रतिपालकः प्रतिपलं शम्भुस्सदा राजते ।
वामाङ्गे गिरिराजराजतनया गौरी सदा वर्तते
आरूढे वृषभे शिवं ननु सदा वन्दे च गौरीपतिम् ।।1।।

सन्धातुं स गतो हि सागरतटं रामो यदा जानकीम्
स्तोत्रं पार्थिवपूजनं बहुविधं शम्भोः कृतं तेन वै ।
रामेणैव सुपूजितः परशिवः वन्द्यस्स रामेश्वरो
भूतेशं जगदीशमीशपरमं वन्दे शिवं शङ्करम् ।।2।।

गात्रे भस्मरजश्शिवो हि रमयन् दिव्याम्बरं धारकः
कण्ठे यस्य विराजते सुभुजगो हस्ते त्रिशूलं तथा ।
चन्द्रो यस्य विभाति मस्तकवरे गङ्गाजलं शीर्षके
वन्दे तं गिरिजापतिं सुरगुरुं कैलासनाथं सदा ।।3।।

चिन्ताशोकहरं शिवं सुखकरं देवासुराणां प्रियं
लोकेशं च कृपाकरं हरिहरं लोकस्य तं साक्षिणम् ।
सर्वं सर्वमयं सवं च निखिलं शम्भुं दयासागरं
वन्दे तं परशोर्गुरुं च निपुणं गङ्गाधरं शङ्करम् ।।4।।

संसारस्य च साररूपसकलं सूक्ष्मातिसूक्ष्मं परं
तत्स्थूलं सुवरं बृहज्जगदिदं रूपं च ते दृश्यते ।
दुष्टानां च विनाशको हि सततं सत्यं परं ज्ञापयन्
वन्दे तं करुणाकरं च निखिलं शान्तिप्रदं सम्भवम् ।।5।।

यस्यैवं ननु सन्ति पञ्चसुमुखाः शम्भोस्सदा मन्दिरे
कैलासे च रराज वै मृगपटे यो रावणस्येश्वरः ।
शूलं स्वर्णघटौ करेषु सततं हस्तेषु मालाश्शुभाः
व्याघ्रस्यैव पटं दधार शुभदं शम्भुं त्रिनेत्रं भजे ।।6।।

विष्णुब्रह्मनुतं त्रिसत्यपरमं सत्यप्रदं तं शिवं नित्यं सत्यमयव्रतं
शुभमिदं लोकेश्वरं शेखरम् ।
पारं यो भवसागराच्च मनुजान् शीघ्रं करोतीति वै
वन्दे तं परमेश्वरं हितकरं श्रीनीलकण्ठं सदा ।।7।।

बिल्वं सुन्दरपुष्पमर्चितशिवं त्वन्यच्च भावं परं
धूपं दीपदयान्वितं च करणं शम्भोस्तवाराधनम् ।
भक्त्या वै रचितं शिवानि ! ललितं स्तोत्रं च पुण्यप्रदं
वन्दे तं किल योगिनां गुरुवरं साधुं त्रिनेत्रं युतम् ।।8।।
**( शार्दूलविक्रीडितं छन्दः )**

# दर्शनमालानुसारं योगदर्शनम्

**शान्तिनी वि. एम शोधछात्रा,**
**श्रीशंकराचार्य संस्कृतविश्वविद्यालयः, कालटी।**

दर्शनं नाम किमिति प्रश्ने सति सामान्यतया वक्तुं शक्यते 'दृश्यते आधुनिकयुग अद्वैताचार्यैण श्रीनारायणगुरुणा वेदान्तशास्त्र प्रतिबोधितं तत्वं अद्वैतं लोककल्याणाय प्रति-पाद्यते। गुरुदेवः क्रिस्त्वब्धे 1864 आगस्त् 26 तमे दिने तिरूवनन्तपुरे चेम्पषन्ति इति ग्रामे वयल्वारगृहे भूजातः। तस्य पिता माटनाशान् माता कुट्टियम्मा च भवतः। न केवलं केरलेषु किन्तु लोके सर्वत्रापि तस्य नाम सुपरिचित-मेव। अधःस्थितजनानां उन्नमनाय सः अतीव श्रद्धालुः आसीत्। तदर्थं गुरुणा कैरली-तमिल्-संस्कृत भाषासु षष्ठी परकृतयः विरचितम्। ते स्तोत्रकृतयः, अनुशासनकृतयः, गद्यकृतयः, परिभाषाकृतयः दार्शनिककृतयः इति विभक्ताः। गुरोः दार्शनिककृतिषु अन्यतमा भवति दर्शनमाला। मनः एव मनुष्याणां सर्वबन्धमोक्षयोः कारणं भवति। मनसः बन्धनात् यावत् समयं अस्माकं बोधः मुक्तः भवति तावत् समयं वयं मुक्ताः भवन्ति। एवं मनः संकल्पविकल्पेभ्यः मोचयितुं उपयुक्तां सिद्धिं साधारणजनेषु संवेदयितुं आरभते गुरुदेवः। तदर्थं गुरुदेवेन प्रोक्तानि दशदर्शनानि दर्शनमालायां अन्तर्भवन्ति। समस्तं वेदान्तशास्त्रं दशदर्शनरूपेण विभज्य अस्मिन् ग्रन्थं सक्रमं प्रतिपातयति। दर्शनशब्दस्य सामान्यार्थः वीक्षणं इति भवति। सर्वमपि वस्तु सम्पूर्णतया वा द्रष्टुं शक्यते। सम्पूर्णं दर्शनं एव सत्यदर्शनं भवति। संपूर्ण दर्शनं तु मिथ्यादर्शनं भवति। जीवितप्रतिभासगतं अपूर्णं दर्शनं पूर्णेन वस्तुदर्शनेन मेलयित्वा जिज्ञासवे पुरुषाय विशदयति गुरुः अस्मिन् ग्रन्थे। दर्शनमालायां गुरुः साधारण जनेभ्यः एव वक्तुं आरभ्यते। साधारणस्य मानवस्य लोकदर्शमं तथा एव गुरुः प्रथमं अङ्गीकरोति। सर्वेपि विश्वासिनः हिन्दुः वा क्रैस्तवः वा इस्लामिकः वा आदौ इदं लोकं न अस्ति पुनः स्पष्टा स्वस-ंकल्पेन इदं जगत् ससर्ज इति विश्वसन्ति। अयं विश्वासः एव गुरुदेवः प्रथमं विशकलनाय स्वीकरोति। मानव मानसे संजाताः सर्वेपि मिथ्यबोधाः मिथ्या एव इति बोधः यदा जायते तदा तादृश अज्ञानजन्याः भयभीतयः अपकर्षताबोधः च तस्य मानसात् दूरीकर्तुं शक्यते। तस्मादेवबोधवत्करणस्य प्रथमसोपानत्वेन गुरुदेवः अध्यारोपदर्शनं उपदिशति। तदनन्दरं क्रमेण अपवाददर्शनं, असत्यदर्शनं, मायादर्शनं, भानदर्शनं, कर्मदर्शनं, ज्ञानदर्शनं, भक्तिदर्शनं, योगदर्शनं च उपदिश्यते। अन्ते निर्वाणदर्शनं उपदिशति। गुरुदेवः मोक्षमार्गं प्रापयितुं इच्छन् सर्वान् अपि मानुषान् तं लक्ष्यं साधयितुमेव अस्य ग्रन्थस्य रचनां निवतर्यामास। योगदर्शनम् दर्शनमालायां नवम दर्शनं भवति योगदर्शनम्। योगस्य निर्वचनं, स्वरूरं, साधनं, फलं च प्रकरणेस्मिन् गुरुणा स्पष्टुं निरूप्यते। यत् मनः चिदात्मनि सततं योजयति युनक्ति च, मनोनिरोधरूपः सः अयं योगःइति शंसितः। योगः इति पदस्य निर्वचनं द्विधा भवति। योजयतीति योगः,युनक्ति इति योगः।1 चिदात्मनि अर्थात् ज्ञानस्वरूपे आत्मनि मनसः योजनं एव योग इति उच्यते। यत्र द्रष्टा, दर्शनं दृश्यं न विद्यते तत्र वासना योजयेत्। यः पश्यति सः द्रष्टा भवति। दर्शनक्रिययेव दर्शनं भवति।

# मृत्योः परं कर्म हि मनुष्यं स्मारयति



**-प्रदीपनाथः, असमराज्यम्।**

एकदा महाराजः शुद्धोदनः राज्यभ्रमणाय अगच्छत्। मार्गे तेन कश्चन वृद्धः दृष्टः यः वृक्षारोपणं करोति स्म। महाराजः तम् अपृच्छत् भोः महोदय! भवान् किमर्थं वृक्षारोपणं करोति किं भवान् एतस्मात् वृक्षात् फलं प्राप्स्यति वृद्धः अवदत् राजन्! एतस्माद् वृक्षाद् अहं फलं न प्राप्स्यामि यतः वृक्षः एधित्वा यदा फलं प्रदास्यति तदा अहम् इहलोके न स्थास्यामि। परन्तु राजन्! अस्माकं उत्तराधिकारिणः एतस्मात् वृक्षात् स्वादिष्टं फलं प्राप्स्यन्ति एव। अस्माकं पूर्वजैः आरोपितेभ्यः वृक्षेभ्यः यथा वयं फलानि प्राप्य तानि खादित्वा च तेषां स्मरणं कुर्मः तेभ्यश्च धन्यवादान् व्याहरामः तथैव अस्माकं उत्तराधिकारिणोऽपि अस्माकं स्मरणं करिष्यन्ति।
अर्थात् मम मृत्योः परमपि अस्मिन् मर्त्यलोके मम स्मरणं भविष्यति।

एवमेव मनुष्यस्तु किमपि नीत्वा नागच्छति न तु किमपि नीत्वा इतः गच्छति। अस्मिन् मर्त्यलोके मनुष्यस्य किमपि यदि अवशिष्टं स्यात् तर्हि तस्य कर्म हि केवलम्। अतः हे राजन्! अहं प्रेम्णा वृक्षारोपणं करोमि येन मम मृत्योः परमपि मम स्मरणं भवेत्।

वृद्धस्य वचनं श्रुत्वा महाराजः अत्यन्तं सन्तुष्टः अभवत्, तम् अवदत् च हे पितः! भवतः इदं वचनं मम कृते अत्यन्तं प्रेरणादायकं वर्तते। इतः परम् अहमपि तथैव करिष्यामि इत्युक्त्वा महाराजः तस्मै वृद्धाय धन्यवादान् ज्ञापयित्वा ततः अगच्छत्।

# ॥ शिव महिम्न स्तोत्रम्॥



- डॉ तेज प्रकाश पूर्णानन्द व्यास

**बहुल-रजसे विश्वोत्पत्तौ भवाय नमो नमः**
**प्रबल-तमसे तत् संहारे हराय नमो नमः**
**जन-सुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः**
**प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः**

हे भव, मैं आपको रजोगुण से युक्त सृजनकर्ता जान कर आपका नमन करता हूं। हे हर, मैं आपको तामस गुण से युक्त, विलयकर्ता मान आपका नमन करता हूं। हे मृड, आप सतोगुण से व्याप्त सभी का पालन करने वाले हैं। आपको नमस्कार है। आप ही ब्रह्मा, विष्णु एवं महेश हैं। हे परमात्मा, मैं आपको इन तीन गुणों से परे जान कर शिव रूप में नमस्कार करता हूं।

**कृश-परिणति-चेतः क्लेशवश्यं क्व चेदं**
**क्व च तव गुण-सीमोल्लङ्घिनी शश्वदृद्धिः**
**इति चकितममन्दीकृत्य मां भक्तिराधाद्**
**वरद चरणयोस्ते वाक्य-पुष्पोपहारम्**

हे शिव आप गुणातीत हैं और आपका विस्तार नित बढ़ता ही जाता है। अपनी सीमित क्षमता से मैं कैसे आपकी वंदना कर सकता हूं पर भक्ति से ये दूरी मिट जाती है तथा मैं आपने कर कमलों में अपनी स्तुति प्रस्तुत करता हूं।

**असित-गिरि-समं स्यात् कज्जलं सिन्धु-पात्रे**
**सुर-तरुवर-शाखा लेखनी पत्रमुर्वी**
**लिखति यदि गृहीत्वा शारदा सर्वकालं**
**तदपि तव गुणानामीश पारं न याति**

''हे शिव, यदि नीले पर्वत को समुद्र में मिला कर स्याही तैयार की जाए, देवताओं के उद्यान के वृक्ष की शाखाओं को लेखनी बनाया जाए और पृथ्वीको कागद बनाकर भगवती शारदा देवी अर्थात सरस्वती देवी अनंतकाल तक लिखती रहें तब भी हे प्रभो! आपके गुणों का संपूर्ण व्याख्यान संभव नहीं होगा।''

**असुर-सुर-मुनीन्द्रैरर्चितस्येन्दु-मौलेः**
**ग्रथित-गुणमहिम्नो निर्गुणस्येश्वरस्य**
**सकल-गण-वरिष्ठः पुष्पदन्ताभिधानः**
**रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार**

इस स्तोत्र की रचना पुष्पदंत गंधर्व ने चन्द्रमौलेश्वर शिव जी के गुणगान के लिए की है जो गुणातीत हैं।

**अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्**
**पठति परमभक्त्या शुद्ध-चित्तः पुमान् यः**
**स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र**
**प्रचुरतर-धनायुः पुत्रवान् कीर्तिमांश्च**

जो भी इस स्तोत्र का शुद्ध मन से नित्य पाठ करता है वह जीवन काल में विभिन्न ऐश्वर्यों का भोग करता है तथा अंततः शिवधाम को प्राप्त करता है तथा शिवतुल्य हो जाता है।

**महेशान्नापरो देवो महिम्नो नापरा स्तुतिः**
**अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम्**

महेश से श्रेष्ठ कोई देव नहीं, महिम्न स्तोत्र से श्रेष्ठ कोई स्तोत्र नहीं, ॐ से बढकर कोई मंत्र नहीं तथा गुरु से उपर कोई सत्य नहीं।

**दीक्षा दानं तपस्तीर्थं ज्ञानं**
**योगादिकाः क्रियाः**
**महिम्नस्तव पाठस्य कलां**
**नर्हन्ति षोडशीम्**

दान, यज्ञ, ज्ञान एवं त्याग इत्यादि सत्कर्म इस स्तोत्र के पाठ के सोलहवें अंश के बराबर भी फल नहीं प्रदान कर सकते।

**कुसुमदशन-नामा सर्व-गन्धर्व-राजः**
**शशिधरवर-मौलेर्देवदेवस्य दासः**
**स खलु निज-महिम्नो भ्रष्ट एवास्य रोषात्**
**स्तवनमिदमकार्षीद् दिव्य-दिव्यं महिम्न :**

कुसुमदंत नामक गंधर्वों का राजा चंद्रमौलेश्वर शिव जी का परम भक्त था। अपने अपराध (पुष्प की चोरी) के कारण वह अपने दिव्य स्वरूप से वंचित हो गया तब उसने इस स्तोत्र की रचना कर शिव को प्रसन्न किया तथा अपने दिव्य स्वरूप को पुनः प्राप्त किया।

**सुरगुरुमभिपूज्य स्वर्ग-मोक्षैक-हेतुं**
**पठति यदि मनुष्यः प्राञ्जलिर्नान्य-चेताः**
**व्रजति शिव-समीपं किन्नरैः स्तूयमानः**
**स्तवनमिदममोघं पुष्पदन्तप्रणीतम्**

जो इस स्तोत्र का पठन करता है वो शिवलोक पाता है तथा ऋषि-मुनियों द्वारा भी पूजित हो जाता है।

**आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्व-भाषितम्**
**अनौपम्यं मनोहारि सर्वमीश्वरवर्णनम्**

पुष्पदंत रचित ये स्तोत्र दोषरहित है तथा इसका नित्य पाठ करने से परम सुख की प्राप्ति होती है।

**इत्येषा वाङ्मयी पूजा श्रीमच्छङ्कर-पादयोः**
**अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः**

ये स्तोत्र शंकर भगवान को समर्पित है। प्रभु महादेव हमसे प्रसन्न हों।

**तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर,**
**यादृशोऽसि महादेव तादृशाय नमो नम :**

हे शिव ! मैं आपके वास्तविक स्वरुप को नहीं जानता। हे शिव आपके उस वास्तविक स्वरूप जिसे मैं नहीं जान सकता उसको नमस्कार है।

**एककालं द्विकालं वा त्रिकालं यः पठेन्नरः**
**सर्वपाप-विनिर्मुक्तः शिव लोके महीयते**

जो इस स्तोत्र का दिन में एक, दो या तीन बार पाठ करता है वो पाप मुक्त हो जाता है तथा शिव लोक को प्राप्त करता है।

**श्री पुष्पदन्त-मुख-पंकज-निर्गतेन**
**स्तोत्रेण किल्बिष-हरेण हर-प्रियेण**
**कण्ठस्थितेन पठितेन समाहितेन**
**सुप्रीणितो भवति भूतपतिर्महेशः**

पुष्पदंत द्वारा रचित ये स्तोत्र शिव जी अत्यंत ही प्रिय है। इसका पाठ करने वाला अपने संचित पापों से मुक्ति पाता है।

**॥ इति श्री पुष्पदंत विरचितं शिवमहिम्नः स्तोत्रं सम्पूर्णः॥**

## अमृतवाणी गीतातत्वार्थबोधः।।



शत्रुघ्नश्रीनिवासाचार्यः
पण्डित शम्भुनाथ शास्त्री
वेदान्ती भागलपुर,
( बिहार )

**ध्यायतो विषयान्पुंसः**
**सङ्गस्तेषूपजायते ।**
**सङ्गात्सञ्जायते कामः**
**कामात्क्रोधोत्रभिजायते।।**
( गीता/2/62)

हिन्द्यां पद्यानुवादः सवैय्या-
ध्यान करै विषयी सङ्ग मानव
मान गुमान सदा उठि धावै,
ताहि सो काम जगे मन भीतर
काम ते क्रोध भयंकर आवै।
मात पिता गुरु देव न मानत
काम वही जो करै मन भावै,
हरि सो नेह करै कबहुँ नहि
व्याकुल होई सदा दुःख पावै। हरिभक्तिविहीनानां मनः विषयकारकम्। तस्मात् कामः समुत्पन्नः कामः क्रोधस्य कारणम्।।

**संस्कृतभाष्यम्-** भगवद्भक्ति विहीनानां जीवानां विषयसङ्गतिः स्वभावत एव भवति। हरिचिन्तनं विहाय मानवःसंसारमाश्रयति। यदा विषयासक्तः जीवःहरेराश्रयं त्यक्त्वा सासारिकपदार्थानां चिन्तनं करोति, तदा शनैः शनैः तेषु सांसारिकपदार्थेषु विषयेषु तस्य सङ्गः समुत्पन्नः भवति। विषयेषु सङ्गः एव रागः आसक्तिः मन्यते। तस्मात् सङ्गतिकारणात् जीवानां मनसि मनसिजः पञ्चशरं नीत्वा कामोद्वेगं समुत्पादयति। कामनायाः पूरत्यर्थं विषायासक्तः जीवः चेतनाशून्यो भूत्वा लोकलज्जां विहाय इतस्ततः भ्रमति। यदा कामस्य पूर्तिः नहि भवति चेत् तदा तस्मिन् जीवे क्रोधः समुद्भवति। कथ्यते च - ' कामातुराणां नहि लोकलज्जा' कामनानुकूल पदार्थप्राप्तौ सति तेषु पदार्थेषु लोभः संजायते। 'लोभः पापस्य कारणम्'इति न्यायेन जीवः नैर्घिण्यपापकर्मणि प्रवृत्तो भवति। कामनाजन्यलोभप्राप्त्यभावे विरोधिनं प्रति तस्मिन् कामासक्तजीवे क्रोधः समुत्पद्यते। तस्मात् अवसादग्रस्तो भूत्वा व्यर्थं जल्पति। विषयाणां चिन्तनं कुर्वतः मानवस्य विषयेष्वेवासक्ति र्भवति। आसक्तेरव कामःजायते।कामात् क्रोधस्य उत्पत्तिर्भवति । 'विषयासक्तेःपरिपक्वावस्था कामः' तस्माद्धि विषयत्यागानन्तरमेव कामक्रोधादीनां शमनम् भवितुमर्हति। निष्कामकर्मणि रतः जीव एव विषयत्यागी भवितुं शक्यते। हरिपादपद्माश्रयी पुरूषःविषयत्यागी भूत्वा निरन्तरमानन्दमनुभवति।

**शाब्दबोधः-** ढ1लविषयासक्तेः परिपक्वावस्था कामः। ढ2ल हरिभक्तिविहीनत्वं विषयासक्तत्वम्।

**अन्वय शब्दार्थः-** श्लोकसंकेतः-- ध्यायतोविषयान्पुंसः- कामात्क्रोधोत्रभिजायते ( गीता/2/62) विषया शब्दादिविषयों का, ध्यायतः अनादि वासना के फलस्वरूप चिन्तन करने वाला, पुंस जिसने अपने चित्त को मुझमें नहीं लगाया ऐसे पुरुष का,तेषुशब्दादिविषयों के प्रति सङ्गः आसक्ति (प्राप्त करने की इच्छा, उपजायतेउत्पन्न होती है,सङ्गात्विषयों के प्रति अनुराग से, काम कामना वासना (विषयों के प्रति अनुराग की वह परिपक्वावस्था कामना है जिसके उत्पन्न होने पर पुरुष विषय का भोग किये विना नहीं रह सकता), सञ्जायते उत्पन्न होती है, कामात्कामना से (कामना की पूर्ति नहीं होने पर),क्रोधः क्रोध,अभिजायतेउत्पन्न होता है।

**तत्वार्थः-** विषयों का चिन्तन करने वाले पुरुष को विषयों की सङ्गति हो जाती है, और धीरे -धीरे विषयों में आसक्ति हो जाती है। विषयों में आसक्ति के कारण काम की उत्पत्ति हो जाती है तथा काम से क्रोध होता है।

**रहस्यात्मक-तथ्य -** पूर्व जन्मों के विषय सङ्ग से मनुष्य का मन भगवान् के चिन्तन में नहीं लगता है। वह इन्द्रियों को संयमित करने काबलात् यत्न तो करता है ,किन्तु अनादि काल से विषयरसास्वादन अभ्यास के कारण वासना नष्ट नहीं होती, फलतः वह ईश्वर चिन्तन न कर संसारिक पदार्थों के चिन्तन का अभ्यासी हो जाता है। इस कारण से उन पदार्थों मेंउसकी आसत्ति बढ़ने लगती है। विषयासक्ति से काम उत्पन्न हो जाता है जो मनुष्य के जीवन के उन्नयन में बाधक ही नहीं अपितु दुजय्य शत्रु भी है। आसक्ति की परिपक्वावस्था का नाम काम है। जब कामना की किञ्चित -किञ्चित् पूर्ति होने लगती है तब उसके प्रति लोभ बढ़ने लगता है ।अनुकूल पदार्थों की पूर्ति नहीं होने पर विरोधीकारकों के प्रति क्रोध उत्पन होने लगता है जिससे वह मनुष्य अवसादग्रस्त होकर अधोगति को प्राप्त होता है।

## ।।गीतोपनिषद् ज्ञानामृतं।।





गीताज्ञान संचरण समितिः,
पटना, विहार, अध्यक्षः
डॉक्टर सुदर्शन श्रीनिवास
शाण्डिल्यः

**।। नारायण। । गोविन्द। । भक्तवत्सल। ।**
**।।। अपि चेत् सुदुराचारो । ।**
**।। कोटि विप्र वध लागहिं जेहीं।।**
**।। आयो सरन तजौं न तेहीं।।**
**नारायण नारायण नारायण**

गीताज्ञानं समेषां मानवानां नूनं समुद्धारकं।।ये सन्ति सर्वतः दीनाः हीनाः मलीनाः पापिनः दुराचारिणः सर्वत्यक्ताश्च तेषामपि रक्षणाय पालनाय स्नेहदानाय समुद्धाराय च कृपाकूपारः कृपाकरः करुणामयः करुणावरुणालयः कृष्णः सामोदं वाहू प्रसार्य समुद्घोषति आगच्छ आगच्छ आगच्छ। यूयं ममात्मानः। कथं युष्मान् त्यक्तुं समर्थो भवेयं ममातिरिक्तः कः रक्षको भविष्यति यथा गीतायां प्रतिपदोक्तरूपेण ववाद कृष्णः अध्यायः 9 श्लोकं । अपि चेत् सुदुराचारो भजते मामनन्यभाक। साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः। अपि चेदिति पदे महान्आशयः सप्तमेऽध्याये भणितं न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।। बहुजन्मतः पापिनः बुद्धिजडाः मां न मन्यन्ते नावगच्छन्ति न भजन्ते न मम शरणागतिं कुर्वन्ति , एतादृशाः अपि कदाचिद् विशेषकारणवशात् वा सुसंयोगात् ममाग्रे आगमिष्यन्ति चेत् तर्हि तानहं हृदयेन स्वीकरिष्यामि। प्रतिकूलान् जनान् के सत्करिष्यन्ति ,समलङ करिष्यन्ति, संसारेमाम्विना संसारे तु अनुकूलानेव सांसारिकाः स्वीकरिष्यन्ति रक्षन्ति पालयन्ति स्निह्यन्ति च।सांसारिकाः गुण-दोष विवेचनं करियष्यन्ति ,गुणेऽपि दोषान् द्रक्ष्यन्ति, ये सन्ति दोषिणस्तेषां के रक्षकाः स्नेहदातारश्च इदानीं कलियुगे ये धनहीनाः असमर्थाः निरर्थकाः असहायाः रोगिणः तान् स्वजनान् परिजनानपि सम्बन्धिनः मित्राणि परिवारा अपि त्यजन्ति, अपमन्यन्ते च ।अपि अत्यन्तं निकटतमः यथा माता,पिता वान्ये सम्बन्धिनः तानपि दुःखक्षणे त्यक्तुं पुत्रादयः न लज्जन्ते। महती विडम्बना 'वृद्धाश्रमः'।अस्मै कालायैव पुत्रादयो भवन्ति परं शत्रुवदाचरिष्यन्ति। अहो आश्चर्यं आश्चर्यं तान् एतादृशान् सर्वान् जनानपि दीनदयालुः प्रभुः अङ्गीकृत्वा मुहुर्मुहुः मोदते। स प्रभुः दीनबन्धुः अनाथनाथः सर्वनाथः स कदापि जीवदोषान् न पश्यति। स सदा वात्सल्यभावेन समस्तान् जीवान् समुद्धर्तुं प्रतीक्षमाणः बारम्बारं घोषति त्वं साधुरसि कुसङ्गात् मलीनः जातः। नाभ्यन्तरीयाः दोषाः ।आत्मा तु निर्मलः। यथा स्वर्णः वहुकालधूलिधूसरितोऽपि स्वर्ण एव। अतः सर्वस्मिन् कालेऽपि सर्वस्यां परिस्थितावपि ईश्वरः एव इह क्रूरे जगति पिता, माता, सखा,बन्धुः, पुत्रः,गुरुः,सुहृद,प्रभृतयः। स परमः दयालुः सर्वान् सम्बन्धभावान् पालयति। भक्तजीवने सुस्पष्टं दृश्यते। अतः प्रभुशरणमाप्नुयुः पुण्यवन्तः मानवाः। अहर्निशं हे नाथ हे नाथ हे नाथ हे नाथ इति जिह्वोच्चारणं भवेत्। अनेन नूनं कल्याण संचारो भविष्यति। जय श्रीकृष्ण।

**।। विमलः हिन्दीभावानुवादः।।**

अनन्त कल्याण गुण गण निलय नारायण सदैव सर्व जीवों के कल्याण केलिए तत्पर सन्नद्ध रहते हैं।गीता के नवम अध्याय के 30 वें श्लोक में न चाहते हुए भी संयोगवश कोई भी संसार का सर्व प्रथम दुराचारी यदि मेरे शरण में आयेगा तो उसका सहृदय समादर है स्वागत है। यहां किसी केलिए प्रतिबन्ध नहीं। यहां अनुकूल प्रतिकूल का विचार नहीं होता। उसने मेरे पास आने का संकल्प किया ,इतना मात्र ही मेरी परम कृपा का सम्पूर्ण आधार है।यह प्रभु सुवचन है। । प्रभु जीव दोष कभी भी भूलकर नहीं देखता। उनके पास एक ही नेत्र है केवल गुण देखनेवाला वह कैसा पिता जो पुत्रदोष देखता हैप्रत्येक परिस्थिति प्रतिकूलता में पिता मात्र मात्र आत्मकल्याण केलिए अग्रसर होता है रक्षण, भरण,पोषण करता है। निरपेक्ष हितैषी होता है। प्रत्युपकार की भावना तो व्यापार है। तब तो पशु पक्षी ही श्रेष्ठ है जो अपने बच्चों का पालन पोषण प्रत्युपकार रहित करता है। भविष्य की आशाओं की कल्पना भी नहीं। प्रभु कहते हैं मैं तो करुणामय करुणासागर हूं ,फिर मैं तो सदैव कल्याण चाहता हूं। संसार सुख का साथी है। मैं शाश्वत दीनबन्धु हूं। संसार दोषसमूहों को देखता है। मैं केवल गुणसमूहों को देखता हूं।यदि दोष भी है तो उसे गाय की तरह मैं निर्मल बना कर अपने योग्य बना लेता हूं। मेरी सृष्टि का एक प्राणी गाय वात्सल्यभाव से ओतप्रोत है तो मैं सर्वकल्याणगुणसागर हूँ। अतः सर्व भेद भाव रहित जीव मात्र केलिए मेरी शरणागति का पवित्र द्वार पूर्ण रूप से अनाच्छादित है। आओ आओ आओ आओ आओ संसार के विविध दारुण दुर्जाल से निकलो। जहाँ केवल स्वार्थ लोभ, कपट, का दुर्वेग है। अपनत्व का महाभ्रम है।विश्वासघात है। बौद्धिक प्रमत्तता का निस्सरण है। बुद्धिमत्ता, ज्ञानी, धर्मी होने का मिथ्यावरण दृढ है। सर्वत्र शोषण, वंचन, उत्पीड़न,,भय, निराशा, का कुसंसार है। सर्वाधिक दुःखद तो यह है' हाय हमें अपनों से है' सर्व सुखाश्रय प्रभु चरण शरण से शाश्वत अक्षुण्ण सुखी बनें। ।

**।नारायण। ।गोविन्द। ।हृषीकेश। ।**

# स्वप्रतिरोधक क्षमतां प्रति विशेष रूपेण ध्यानं धारयेदिति निवेदये

**यदि जीवनं तर्हि जगद्वर्तते**
**-डॉ0 बी0 बी0 अग्रवालः**



**प्रयागराजः। वार्ताहरः।** 'कोरोना' इति विषाणुतः कदापि न बिभेत, सावधानं भवितव्यम्। 'कोविड-19' इति विषाणु सन्दर्भे 'सावधानी हटी दुर्घनटा घटी' इति लोकोत्तिः प्रभाविता चरितार्था च भवति। एतद्विचारं नगरस्य सुप्रतिष्ठितश्चिकित्सकः डॉ0 बी.बी अग्रवाल महोदय अभिव्यक्तवान्। नगरस्य 'सृजन' इति चिकित्सालय एकस्यां विशेषवार्तायामुक्तवान् 'दो गज की दूरी और मास्क है जरूरी' इति सर्वकारस्य निर्देशस्य सम्पूर्णरूपेण परिपालयेत्। प्रत्येकव्यक्तिः स्वस्वास्थ्यं प्रति जागरूको भवेत्। 'कोरोना' इति विषाणोः तृतीयधारां प्रति यदि सर्वे सावधानाः भविष्यन्ति तर्हि कदापि काचित् हानिर्भवितुं नार्हति। योगव्यायामध्यानैश्च स्वशरीरं स्वस्थं स्थापयेत्। प्रतिदिनं प्रातः भ्रमणं कुर्यात्। मुखावरणमवश्यमेव धारयेत्। यथासमय हस्तपादं प्रक्षालयेत्। व्यर्थभ्रमणं व्यर्थवक्तव्यञ्च कदापि न कर्तव्यम्। 'कोरोणा' इति विषाणुं प्रति भयं त्यक्त्वा केवलं सावधानं भवितव्यमिति मे मतिः। मुखावरणमवश्यमेव संधारयन्तु। यथासमय पाणिपादं प्रक्षालयन्तु। व्यर्थभ्रमणं व्यर्थवक्तव्यञ्च कदापि न कर्तव्यम्। 'कोरोणा' इति विषाणुं प्रति भयं त्यक्त्वा केवलं सावधानं भवितव्यमिति मे मतिः।



समाजवादी पार्टी महानगर मजदूर सभा इत्यस्य सदस्यानां त्रिविधानसभावार अध्यक्षाणां घोषणा अभवत्

## भारतस्वतन्त्रतादिनम् राज्यानां राजधानीषु मुख्यमन्त्रिणः ध्वजारोहणं कृत्वा जनेभ्यः शुभाशयं यच्छन्ति

अस्मिन् दिवसे एकोनषष्टि वर्षाः पूर्वं भारतः ब्रिटिशसाम्राज्यात् स्वतन्त्रम् अभवत्। ह्यः राष्ट्रपतिः राष्ट्रं सम्बोधितवान्। सः भारते प्रगतीविषये अनेकानि उदाहराणि दत्तवान्। तानि दृष्ट्वा सः भारतस्य प्रगत्यै आशान्वितः अस्ति। सः भारतस्य विधायकेभ्यः किञ्चित् प्रस्तावनाः दत्तवान्। सः अत्यन्तं सुन्दरं व्याख्यानं अददात्। तेन सह किञ्चित् छात्राः भारतस्य विकासाय नव प्रतिज्ञाः गृहितवन्तः। राष्ट्रपतिः आङ्गभाषायाम् अवदत् प्रतिज्ञाः अपि आङ्गभाषायाम् आसन्। यदि सः तमिलभाषायाम् अवदिष्यत् छात्राः अपि स्वभाषायां प्रतिज्ञां अग्रहिष्यन् तर्हि अतीव सुन्दरः अभविष्यत्। वयं स्वतन्त्राः किन्तु पूर्णस्वतन्त्राः न स्मः। भारतस्वतन्त्रतादिनम् 'अगस्त'-मासस्य पञ्चदशे (15/8) दिनाङ्के राष्ट्रियोत्सवत्वेन आभारते आचर्यते । 1947 तमस्य वर्षस्य 'अगस्त'-मासस्य पञ्चदशे दिनाङ्के भारतगणराज्यं स्वतन्त्रम् अभवत्। अतः एतद्दिनं भारतस्वातन्त्र्यदिनोत्सवत्वेन आचर्यते। तत्पूर्वं ब्रिटिश-जनाः भारतस्योपरि शासनं कुर्वन्ति स्म। 1947 तमस्य वर्षस्य 'अगस्त'-मासस्य चतुर्दशे (14/8/1947) दिनाङ्के मध्यरात्रौ द्वादशवादने आङ्गाः भारतगणराज्यस्य शासनं भारतीयेभ्यः यच्छन्तः भारतत्यागम् अकुर्वन्। भारतस्वतन्त्रतायाः तत् दिनं भारते राष्ट्रियपर्वत्वेन आचर्यते।

स्वातन्त्र्योत्सवस्य प्रमुखः कार्यक्रमः देहली-महानगरस्थे रक्तदुर्गे भारतगणराज्यस्य राष्ट्रपतेः भाषणेन आरभते। ततः प्रधानमन्त्रि द्वाराध्वजारोहणं भवति। अनन्तरं प्रधानमन्त्री सर्वकारस्य कार्याणां योजनां प्राकटयन् सर्वेभ्यः शुभाशयं यच्छति। ततः सर्वेषां राज्यानां राजधानीषु मुख्यमन्त्रिणःध्वजारोहणं कृत्वा जनेभ्यः शुभाशयं यच्छन्ति।

## जन्म-मरण-करणानां प्रतिशरीरं भेदः दृश्यते

पुरुषस्य नानात्व साधकानि कारणानि। जन्ममरण करणानां प्रतिनियमात् इति। नूतन देहेन्द्रियमनोऽहंकारादिभिः पुरुषस्य सम्बन्ध : एव जन्म इत्युच्यते। स्वीकृतानां देहादीनां परित्यागः एव मरणं इन्युच्चते। बुद्धि :अहंकारः, मनः पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि च इत्येत् समुचितं करणं इत्युच्चते। जन्म-मरण-करणानां प्रतिशरीरं भेदः दृश्यते। सः भेदः पुरुषस्य नानात्वे एव उपपद्यते। पुरुषस्य एकत्वे एकस्मिन् पुरुषे जाते सर्वे अपि पुरुषाः अपि जायेरन्। एकस्मिन् पुरुषे मृते सर्वेऽपि मियेरन। तन्न दृश्यते। अतः पुरुषस्य बहुत्वं अङ्गीक्रियते। अयुगपत् प्रवृत्तेः इति।

## असम प्रदेशस्य नलबारी जिलाया चामता स्थित कामरूप महाविद्यालयीय छात्रस्य कीर्तिः





**असम, वार्ताहरः।** असम प्रदेशस्य नलबारीजिलाया चामता स्थित कामरूप महाविद्यालयीय पूर्व छात्रः जितु-उद्दिन-आहमेदः वंशेन काष्ठेन द्विचक्रयानं, गृहादि निर्माणं कृत्वा प्रशंसितः वर्तते। चामताया आमनिग्रामस्य मजिदाविवि-जमिरउद्दिनआदमेदयोः पुत्रः जितु-उद्दिन-आहमेदः।

## देशप्रेमिहुतात्मनां बलिदानमनुत्तमम्

उत्तमं हि उत्तमं महनीयं महत्तमम्
सम्यक् साधु सुशोभनं सत्यं शिवञ्च सुन्दरम्
प्रेरणातिप्रेरितं झर्झरझरझङ्कृतम्
डमडमडमडाङ्कृतं चञ्चुरचमूचञ्चितम्
दुर्गमपथे अञ्चितं क्लिष्टकर्मकर्षितम्
मर्मरमारमर्षितं दुर्धरधाराधर्षितम्
भीषणभयभञ्जितं घनघनघोरगर्जितम्
वैरिवैरवारितं गर्वितगरगञ्जितम्
खण्डखण्डखण्डितं शत्रुरक्तरञ्जितम्
नेति नेति नाशितं दर्पदलनदर्पितम्
रङ्गितरणरञ्जितं स्यन्दितशोणशोणितम्
मण्डलमणिमण्डितं हर्षणपरहर्षितम्
जनगणमनोरञ्जितं देशभक्तिसञ्चितम्
मातृदीक्षादीक्षितं मन्त्रभावचोदितम्
जयजयनादनन्दितं हृदये हृदये स्पन्दितम्
गगने पवने ध्वनितं वदने वदने स्वनितम्
मातरं भोः ! मातरं वन्दे मातरम्
वन्दे मातरं भोः ! वन्दे मातरम्
वन्दे मातरं वन्दे मातरम्
वन्दे मातरं वन्दे मातरम् ।।

**रचयिता- डा.रुरुकुमारमहापात्रः**
**अध्यापकः,राष्टियसंस्कृतविश्वविद्यालयः, तिरुपतिः**

# नवोत्थाननायकः महर्षिदयानन्दसरस्वती



अज्ञतायाः अन्धकारे मग्ने स्वसमाजे ज्ञानस्य प्रकाशं दशर्यन् महर्षिदयानन्दः आधुनिकनवोत्थाननायकेषु प्रमुखः अभवत्। ऊनविंशतितमशतकस्य उत्तरार्धे 1825 फेब्रुवरि 12 तमे दिनाङ्के लब्धजन्मोयं समाजस्य अनाचारान् प्रति स्वजीवनं समर्पितवान्।

तस्मिन् काले भारते अनाचाराः अन्धविश्वासाः च प्रचलिताः आसन्। तदवसरे आसीत् दयानन्दसरस्वतीवर्यस्य जननम्। सामाजीकपरिष्करणाय राष्ट्रनवीकरणाय च अहर्निशं प्रयत्नमकरोत् अयं संन्यासीवर्यः स्वतन्त्रभारतम् इति आशयस्य प्रचारकश्चासीत्। भारतीयानां जीवनरीतयः विश्वासाः च वेदाधिष्ठितं भवति इति तैः उद्घोषितम्।

गुजरात् राज्यस्य कतियवार देशे टङ्करनगरे अयं जनिमलभत। बाल्ये तस्य नाम मूलशङ्करः इत्यासीत्। दयाल् जी इति गृहे तम् आह्वयति स्म। संन्यास दीक्षायाः स्वीकरणानन्तरमेव दयानन्दः इति प्रशस्तोऽभवत्। बाल्यादेव सामाजिकोन्नमनाय प्रयत्नमकुर्वन्। मूलशङ्करस्य बाल्यं दुरितपूर्णं मासीत्। भगिन्याः तथा पितृसहोदरस्य च देहवियोगः दयानन्दं चिन्तामग्नमकरोत्। ततः मोक्षमार्गमन्विष्य यात्राः आरब्धाः। स्वगृहमुपेक्ष्य विविधदेशेषु यात्राम् अकरोत्। महर्षिणमुपगम्य मोक्षमार्गम् अपृच्छत्। किन्तु तेषाम् उपदेशेषु अतृप्तः सः पुनरपि बहुदूरम् अटति स्म। अन्ते सः परमानन्दसरस्वती महाभागात् संन्यासदीक्षां स्वीचकार। ततः दयानन्दसरस्वती इति नाम स्वीचकार। तदनन्तरं योगशास्त्रादि विषयान् पठित्वा वादप्रतिवादान् अकरोत्। दुराचरान् प्रति विरोधं प्रकटयति स्म। महर्षिवर्यः मोक्ष-पुनर्जन्म-कर्मफलसिद्धान्तादि विषयान् अङ्गीकृतवान्।

त्रैतवादः आसीत् तस्य सिद्धान्तः। साधारणजनाः अपि तस्य सिद्धान्तं अजानन्। 1875 एप्रिल् 10 तमे दिनाङ्के आर्यसमाजम् अस्थापयत्। आर्यसमाजस्थापनाय दयानन्दः महान् प्रयत्नः अकरोत्। आर्यसमाजेन वेदाः सत्यप्रमाणत्वेन अङ्गीकृताः। 1883 ओक्टोबर मासस्य 31 दिनाङ्के दीपावल्यां समाधिं प्राप। त्रैतवादः। त्रैतवातः दयानन्दस्य तत्त्वशास्त्रं भवति। तन्मते ईश्वरः, आत्मा, प्रकृतिः च तत्त्वत्रयं भवति। एते क्रमशः निमित्त-साधारण-उपादानकारणत्वेन कल्पिताः। अचेतनप्रकृतेः चेतनवस्तुकारकः शक्तिविशेषः ईश्वरः। सः ईश्वरः सच्चिदानन्दः, निराकारः, सर्वशक्तः, न्यायकारी, दयालुः, जन्मरहितः, सर्वव्यापि, सर्वान्तर्यामी, जरादिरहितः, अनश्वरः, निर्भयः, नित्यः, पवित्रश्च। उपादानकारणात् प्रकृतेः पञ्चेन्द्रियानुभवयोग्यवस्तूनि सञ्जातानि, साधारणकारणरूप आत्मना तानि उपभुज्यन्ते। श्रीशंकरस्य अद्वैतदर्शनमिव न क्लिष्टमिदं नास्त्यत्र कर्मज्ञाननिषेधः अपि च अद्वैतापग्रथने त्रैतवादसमन्वये अद्वैतं च द्रष्टुं शक्यते। अत्र अयमेव भेदः - शंकरमते माया प्रधाना, महर्षिदयानन्दमते सर्वं सत्यम्, माया अप्रधाना च। आर्यसमाजस्य स्थापनम्।

आर्यसमाजद्वारा महर्षिः लोकान् पुनरुद्बोधयत्। निर्मितेषु नियमेषु 1932 वैक्रमाब्दस्य चैत्रशुक्ल पञ्चमी तिथौ बुधवासरे तदनु 1975 ईसवीयवर्षस्य एप्रिल् मासस्य दशमे दिनाङ्के सायं सार्धपञ्चवादने मुम्बई नगरस्य गिरगांवोपवसतिसम्भागे श्री डा. मणिक्चन्द्रमहोदयस्य वाटिकायाम् आर्यसमाजस्य स्थापनमभूत्। श्रीगिरिधारीदयास् दास् कोठारि महोदयश्च आर्यसमाजस्य प्रथम सभापतिरूपेण तथा श्रीसेवककृष्णदासमहाभागः मन्त्रित्वेन च नियुक्तः। तदानीम् एकशतसंख्यकाश्च सदस्याः आसन्। सर्वजनाग्रहेणाऽपि किमपि पदमस्वीकुर्वन् महर्षिणा साधरणसदस्यरूपेणैव स्थितः। पूर्वम् आर्यसमाजेन अष्टाविंशति संख्यकाः नियमाः निर्धारिता आसन्। परं यदा लाहोरनागरे आर्यसमाजस्य संस्थापनमभवत् तदा दश संख्याका एव नियमाः निश्चिताः। तियोसफिकल् सोसाइटि 1875 वर्षस्थनवम्बरमासस्य सप्तदशतारिकायां मैडमब्लैवट्स्कीकर्नल अल्काटमहोदयश्चोभौ तियोसफिकल् सोसाइटिसंस्थापयताम्। संस्थायाः संस्थापनं सम्पन्नं परं तौ हि स्वकर्मभिरतितरां कुख्यातावास्ताम्, तयोर्भोजनप्राप्तिरपि दुर्लभाऽभवत्। तत्रावासोऽप्यसम्भव आसीत्, अतस्तौ हि भारतवर्षं प्रत्याशान्वितावभवताम्। भारतवर्षे पदमारोपयितुं कस्यचित् शक्तिमतो महापुरुषस्याश्रयोऽपेक्षित आसीत्। श्रीहरिश्चन्द्रचिन्तामणिमहोदयात् श्रीअल्काट महाशयो महर्षेर्दयानन्दस्य परिचयं प्राप्नोत्। एवं तियोसफिकल् सोसाइटि संस्था तदार्यसमाजेन समं स्वसम्बन्धं समायोजयत्, यदा हि अमेरिकावासिनः संस्थासञ्चालकाः स्वश्वो भोजन प्राप्ति विषयेऽपि सन्देहयुता आसन्। तत्र तेऽतितरां कुख्याताः दुःखिताश्चासन्। पर्याप्तपत्रव्यवहारानन्तरं तियोसफिकल् सोसाइटि युगलमिदं 1879 तमवर्षस्य जनवरिमासे मुम्बई नगरमागच्छत्। महर्षिदयानन्द सरस्वती कृत ग्रन्थावलिः सत्यार्थ प्रकाशः, ऋग्वेदादि भाष्य भूमिका, वेदभाष्याणि, संस्कार विधिः, आर्याभिविनयम्, गोकरुणा निधिः, पञ्च महायज्ञ विधिः, संस्कृत वाक्य प्रबोधम्, व्यवहारभानु, काशी शास्त्रार्थम्, वेदविरुद्ध मत खण्डनम्, ब्रह्मोछेदनम्, भ्रान्ति निवारणम्, सत्यधर्मविचारः,आरोद्देश्य रत्नमाला, वेदाङ्ग प्रकाशः इत्यादयः दयानन्द सरस्वतेः कृतयः भवति।

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

## ॥श्री राम कथा॥

**वन्दे शारदपूर्णचन्द्रवदनं वन्दे कृपाम्भोनिधिं**
**वन्दे शम्भुपिनाकखण्डनकरं वन्दे स्वभक्तप्रियम् ।**

वन्दे लक्ष्मणसंयुतं रघुवरं वन्दे ब्रह्म परात्परं गुणमयं श्रेयस्करं शाश्वतम् भगवत्स्वभावो वर्तते ते भक्तानामवगुणान् कदापि नावलोकयति, सदा स्वभावतः तेषां सद्गुणान् पश्यति। दुराचारिणोऽपि यदि तस्य शरणं गच्छन्ति तर्हि सः तत्कल्याणमेव करोतीति महापुरुषाः शास्त्राणि प्रमुदिमनसा गायन्ति। अस्मिन्सन्दर्भे मानसे एका कथा शिक्षयति, काचिद् भ्रामकत्रुटिकारणाद् ऋषिगौतममहाभागः स्वधर्मभार्यां देवीं अहिल्यां पाषणतुल्यां भवत्विति शापितवान्। तदा स्वाभिकरुपेण देवी अहिल्या ऋषिगौतममहाभागं प्रत्याक्रोशिता भवेत्, किन्तु एतादृशो न जातः। एतदेवास्ति भक्ति प्रभावः। सा गुरुदेवविश्वामित्रेण सह समागतवान्, स्वपरमाराध्यं श्रीरामस्य पतितपावनचरणौ पश्यन्ती कथितवती, हे भगवन्! अपवान्यस्मि, किन्तु भवान् सम्पूर्णं संसारं पावनकर्ता वर्तते। भवान् कृपां कृत्वा मोपरि स्वचरणकमलभायाम् कृपां कुर्यादिति प्रार्थये।

हे प्रभो! यदि भवान् स्वनेत्राभ्यां ममोपरि कृपां करिष्यति, तर्हि भवान् मत्तत्कर्म द्रक्ष्यति, यस्मासत्कारणादहं पतिता जाता। हे दीनबन्धो! हे करुणासिन्धो! भवतः हस्तयोः धनुषबाणौ शोभायमानौ स्त, तर्हि मद्विचारेण हस्तमाध्यमेन भवत्कृपा संभवो भवितुं नार्हतीति चिन्तयामि। हे हरे! भवचरणौ एव एतादृशौ स्तः, याभ्यां पतिपावनीभगवतीगङ्गा निःसृता जाता। भगवतीगङ्गा कदापि कञ्चितं जनं कुण्डलीं न पश्यति न विचारयति, यत् अयं प्राणी पापात्मा या धर्मात्मा वर्तते। सा भगवती सदा प्रमिदमनसा निष्कामभावेन सर्वेषां प्राणिनां कल्याणं कुर्वन्ती प्रवहति। हे नाथ! भगवतीगङ्गा सदा कल्याणं करोतीति सिद्धान्तोऽस्ति।भगवती देवी अहिल्या वाण्या काचिदपराधं न कृतवती। श्रीरामचरितमानसे पूज्यपादाः गोस्वामिनो तुलसीदासमहाभागाः लिखितवन्तः, भगवती अहिल्या भगवत्स्तुतिं स्वनिर्मलवाण्या कृतवती। यत्प्राप्तोऽस्ति तन्माध्यमेनैव भगवत्प्रसन्नार्थं किञ्चित्कार्यं कुर्यात्। एतादृशी भावनैव भगवद्भक्तिः कथ्यते। तत्र साधूक्तं तया- 'अति निर्मल वाणी अस्तुति ठानी ग्यानगम्य जय रघुराई' इति। भगवद्दिव्यचरणस्पर्शेन यदा भक्तिनिर्मलता जीवने साधकस्य जीवने शापोऽप्यनुग्रहः प्रतीयते। अत एव भगवती अहिल्या भगवन्तमकथयत, हे प्रभो! मत्पतिमहाभागो मह्यं शापं दत्वा ममोपरि महदुपकारं कृतवान्, यतोहि तस्य शापकारणसदेव अद्य सानन्दं भवच्चरणकमयोः दर्शनं कुर्वन्ती मत्सुगतिर्भवन्त्यस्ति। मत्कृते शापोऽपि भवदनुग्रहो जातः। तत्रोच्यते-

**'मुनि श्राप जो दीन्हा अति भल**
**कीन्हा परम अनुग्रह मैं माना॥' इति।**



आचार्य अरविंद पांडेय

हे भगवन्! भवत्पतितपावनी दिव्यछविः मया स्वनेत्रयोः समहिता कृता। अद्यहं तदेवानुभवामि, यत्केवलं भगवान् सदाशिवो जानाति। यथैव भवच्चरणकमलभ्यां भगवती गङ्गा निःसृता तथैव भगवान् महादेवः तां स्वशिरसि धारितवान्। अद्य तच्चरण कमले भवान् मम शीशं स्पर्शं कृत्वा मह्यं धन्यां कृतवान्। भवत्करुणामनुभूयाहं बारम्बारं विचारयामि, शापोऽपि भवदनुग्रहात् कल्याणकारको भूयते। कामारिः भगवान् शिवशंकरः कामग्रस्ता या अहिल्या दावेव धन्यौ जातौ स्तौ। एतदेव भगवद्भक्तिरूपोऽस्तीति मन्ये।

**-क्रमशः**

# हरियाणा-राज्यस्य कलाः संस्कृतिः इतिहासश्च

**- बलदेवानन्द-सागरः**

**हरियाणा अर्थात् परमात्मनः निवास-स्थानम् -** सम्प्रति हिमालयस्य मुकुटवन्तं विशालम् आधुनिकञ्च भारतदेश सरलतया अवगन्तुं शक्यते, अस्य च वैभव-ज्ञानं सुकरञ्चेति नूनं गूगल-कारणात् प्रतीयते परन्तु यावदवधि अस्य देशस्य कलाः संस्कृतिम् इतिहासञ्च सम्पूर्णतया हृदयङ्गमं नैव कुर्मः तावदवधि महतो भारतस्य बोधः नैवास्ति सुकरः विशेषेण भारतस्य पृथक्-पृथक् राज्यानि अवगन्तुं तत्तद्-राज्यानां कलानां संस्कृतेः इतिहासस्य च गभीरतया हृदयङ्गमीकरणं परमावश्यकम्।
'हरियाणा' अर्थात् हरेः ऽपरमात्मनः. निवास-स्थानम् मन्ये, सर्वे जानन्ति एव यत् 'हरि व्यापक सर्वत्र समाना' अर्थात् 'हरिः व्यापकः सर्वत्र समानः' सः परमात्मा सर्वव्यापी किन्तु यस्याः भूमेः नाम एव हरेः निवासत्वेन ख्यातम् सा भूमिः कियती गरीयसी महत्वाधायिनी चास्तीति तु अनुभव-विषयः शाब्दिक-व्याख्यया एवमवगन्तुं शक्यते यत् - हरि अयन ऽअयण, तद्धि पूर्वं 'हर्ययनम'- रूपेण 'हयञ्यणम'-रूपेण वा. प्रयुक्तमासीत्, अनन्तरं भाषित-भाषायां 'हरियाणा'-नाम्ना प्रतिष्ठितं जातम् ।

केचन विद्वान्सो निगदन्ति यत् अस्याः भूमेः नाम आसीत् 'हरित अरण्यम्' अर्थात् 'शाद्वल-सम्भरितं काननम्' - एतस्मिन्नर्थे 'हरितारण्यम्' आसीत् यद्धि कालक्रमेण 'हरियाणा' इति रूढं जातम् एवम्मन्यमानेषु प्रमुखेषु विद्वत्सु श्रीमुरलीचन्द्र-शर्मा, श्रीएच.ए.फडके, श्रीसुखदेवसिंह-छिबः श्रीमुन्नीलाल-प्रभृतयः अन्यतमाः सन्ति आधुनिक-हरियाणा-राज्यस्य प्राचीन-सन्दर्भाः-आधुनिक-सन्दर्भानुसारेण भारतीय-गणतन्त्रे पृथक्-राज्य-रूपेण 1966-तमे वर्षे नवम्बर-मासे प्रथम-दिनाङ्के एतत् प्रतिष्ठापितं जातम्, किन्तु विशिष्टमेतद् ऐतिहासिकं सांस्कृतिकञ्च क्षेत्रमिति हरियाणा-राज्यस्य अस्तित्वं प्राचीनकालादेव अभिज्ञातम् आसीत् ।

राज्यमिदम् आदिकालादेव भारतस्य संस्कृतेः सभ्यतायाश्च धुरत्वेन अवर्तत। स्मृति-कारस्य महर्षेः मनोः अनुसारेण अस्य प्रदेशस्य अस्तित्वं देवताभिः विरचितम् अत एव अयं 'ब्रह्मवर्त'-प्रदेशः इति अभिहितम् । हरियाणा-प्रदेशस्य विषये अनेके सन्दर्भाः वैदिक-साहित्ये समुल्लिखिताः सन्ति प्रदेशेस्मिन् विहितेन उत्खननेन ज्ञायते यत् सिन्धु-उपत्यकायाः सभ्यतायाः, मोहनजोदड़ो- इत्यवशेषाणां च संस्कृतेः विकासः अत्रैव अजायत ।

शास्त्र-वेत्तारः, पुराण-रचयितारः विचारकाश्च सुदीर्घ-कालं यावद् अस्य ब्रह्मर्षि-प्रदेशस्य रमणीये अङ्के स्थित्वा अनेकान् धर्म-ग्रन्थान् विरचय्य ज्ञानं प्रसारितवन्तः। ते सर्वदैव भगवत्याः मातुः सरस्वत्याः पावनस्य ब्रह्मवर्तस्य च गुणान् विविधासु निज-रचनासु वर्णितवन्तः।

अस्य राज्यस्य ब्रह्मवर्त-ब्रह्मर्षि-इति नाम-द्वयम् अतिरिच्य 'ब्रह्मणः उत्तरवेदिका' - इति नाम्नापि प्रदेशोयं ग्रन्थेषु जेगीयते। राज्यमिदम् आदि-सृष्टेः जन्म-स्थानमित्यपि आमन्यते । एतदपि विश्वस्यते यत् मानव-जातेः समुत्पत्तिः यस्मात् वैवस्वत-मनोः जाता, सः अस्यैव प्रदेशस्य राजा आसीत् ।

'अवन्ति-सुन्दरी-कथा'- इति ग्रन्थे अयं मनु-महाराजः स्थाण्वीश्वर-निवासी ऽथानेश्वरवासी. इति वर्णितम् । पुरातत्ववेत्तारो निगदन्ति यद् आद्यैतिहासिक-कालीनायाः, प्राग्हड़प्पा-हड़प्पा-परवर्ति-हड़प्पा-प्रभृतीनाम् चानेकासां संस्कृतीनां बहुविधानि प्रमाणानि, हरियाणा-राज्यस्य वणावली-सीसवाल-कुणाल-मिर्ज़ापुर-दौलतपुर-भगवान्पुरादि-स्थानानाम् उत्खननैः प्राप्तानि ।

हरियाणा - 'भारत' - इति नामकरणस्य पृष्ठभूमिः अस्ति -

भरतवंशी सुदासः अस्मादेव प्रदेशाद् स्वीयं विजयाभियानम् प्रारभत, आर्याणां शक्तिञ्च सङ्घटितवान् । एते एव भरतवंशिनः आर्याः रंहसा सुदूरे पूर्वस्मिन् दक्षिणे च दिग्विभागयोः स्वीयां शक्तिं विवधय्न्तः अग्रेसृताः । अनन्तरं तेषामेव वीर-भरतवंशिनां नाम्ना अशेष-राष्ट्रस्य अभिधानं 'भारत'मिति प्रसिद्धिमगात्।

महाभारत-कालात् शताब्देभ्यः पूर्वम् आर्यवंशिनः कुरवः अत्रैव कृषि-युगमारभन्त । पौराणिक-कथानुसारेण ते आदिरूपायाः सरितः मातुः सरस्वत्याः 48-कोष-मितम् उर्वर-प्रदेशं प्रप्रथमं कृषि-योग्यं व्यदधुः । अत एव सा 48-कोष-परिमिता कृषि-योग्या भूमिः कुरूणां नाम्ना सुप्रतिष्ठिता सती अद्यत्वेपि 'कुरुक्षेत्र'-मिति भारतीय-संस्कृतेः पवित्रप्रदेशत्वेन जगति सम्मान्यते।

सुदीर्घ-कालं यावत् सरस्वत्याः गङ्गायाः च मध्यगतः सुविस्तृतः भू-भागः 'कुरु-प्रदेश'- नाम्ना अभिज्ञायते स्म । महाभारतस्य विश्व-प्रसिद्धं युद्धं कुरुक्षेत्रे एव अयुध्यत । अस्यैव युद्धस्य तुमुलेषु शंख-नादेषु अद्भुतः सनातनः अलौकिकश्च स्वरः उदपद्यत-
'धर्मक्षेत्रे कुरुक्षेत्रे समवेताः युयुत्सवः पाण्डवाश्चैव किमकुर्वत सञ्जय ! श्रीमद्भगवद्गीतायाः अमुना प्रथमेन श्लोकेन साकमेव योगेश्वरस्य श्रीकृष्णस्य विश्व-जनीनस्य पारमार्थिक-स्वरस्य अनुकीर्तनम् अनुगुञ्जनञ्च अद्यापि श्रद्धालुभिः निज-कर्णाभ्यां पेपीयते युगपुरुषस्य भगवतः श्रीकृष्णस्य मुख-कमलात् प्रकटिता श्रीमद्भग- वद्गीता या हि भारतीय-संस्कृतेः बीज-मंत्ररूपास्ति, सर्व-कालार्थं अमरायते । हरियाणा-प्रदेशस्य गौरवयुगम् - वर्धनवंशस्य सवीत्तमः शासकः हर्षवर्धनः आसीत् येन विशालं साम्राज्यं स्थापितम् । हरियाणा-प्रदेशस्य तद् गौरवयुगमासीत् । चीन-देशीयः भिक्षुः ह्वेनसांगः हर्षस्य राजधान्याः (थानेश्वर) स्थाण्वीश्वरस्य वैभवं समृद्धिञ्च समीचीनतया अवणञ्यत् । संस्कृत-साहित्यस्य महान् गद्यलेखकः बाणभट्टः नैजे 'हर्षचरितम्'- नाम्नि ग्रन्थे तत्कालीनस्य हरियाणा-प्रदेशस्य जन-जीवनं सांस्कृतिक-परम्पराश्च व्यापकतया अवर्णयत् । हर्षकालेपि जनपदानां स्वरूपं यथावदेव सन्धारितमासीत्।

सम्राट्, न कदापि अत्र आन्तरिक-व्यवस्थायां हस्तक्षेपमकरोत् । सम्राजो हर्षवर्धनस्य मृत्योः पश्चाद् अत्रत्यं जनजीवनं व्यस्तीभूतम् । अनारतं बाह्याक्रमणानि जायन्ते स्म । परन्तु अत्रत्याः जनाः निज-शक्त्या आन्तरिकीं सामाजिक-व्यवस्थां सन्धारितवन्तः। प्राचीनस्य हरियाणा-प्रदेशस्य सबलायाः गण-परम्परायाः फलस्वरूपेण एव अत्रत्याः जनाः सदा दृढतया जनवादिनः स्थिताः, तथा च कालान्तरेपि ते प्रत्येकमपि तया साम्राज्य-वादिन्या शक्त्या संघर्षम् अकुर्वन् याः काश्चन अपि शक्तयः तेषां जनवादि-व्यवस्थायां हस्तक्षेपं विहितवत्यः। 1857-मिते खीस्ताब्दे सञ्जातो जन-विद्रोहोपि एतस्याः आस्थायाः प्रतीकरूपः । यौधेय-काले अयं 'बहुधान्यक'- प्रदेशस्य नाम्ना अभिज्ञायते स्म। मूर्तिकला-हस्तकला-ललित-कलानां कृते यौधेयाः कृत्स्नेपि प्रदेशे प्रसिद्धाः आसन्। रोहतकस्य मृदङ्ग-वादकाः पटह-ताडकाश्च उज्जयिनीं यावत् गत्वा प्रसिद्धिं प्राप्तवन्तः। मल्लयुद्धे युद्ध-कौशले च ते अद्वितीयाः आसन् । ते एकतः दुर्धर्षाः योद्धारः आसन्, अपरतश्च अदम्य-शक्तिमन्तः कृषकाः अपि । गौरवस्य विषयोयं यत् सहस्राधिकानि वर्षाणि यावत् अमुना गणराज्येन भारतस्य इतिहासे अपूर्वा काचित् प्रसिद्धिः प्राप्ता, तथा च, ते नैजं प्रदेशं गणतन्त्रात्मक-राजनैतिक-व्यवस्थायाः अन्तर्गतं चरम-विकास-पर्यन्तं प्रापितवन्तः । तोमरशासकानां शासनकाले हरियाणा-प्रदेशेन कला-संस्कृति-व्यापारेषु महती उन्नतिः अधिगता यद्विषये वयं दशम-शताब्द्यां सुख्यातेन संस्कृत-विदुषा सोमदेवेन लिखिते 'यशस्तिलक-चम्पू'- इति ग्रन्थे सूचनां लभामहे। हरियाणा-प्रदेशस्य इतिहासो हि अनेक-विधानां राजनैतिक-सामाजिक-घटनानां विस्तृतेतिवृत्तं सत् विराजते यस्य विषये अत्र दिङ्मात्रमेव निर्दिष्टमस्ति भारतस्य हरित-क्रान्तौ समृद्धस्य हरियाणा-प्रदेशस्य योगदानम् - ऊन-विंश-शताब्दस्य षष्ठे दशके 1960. देशे प्रवर्तितायां हरित-क्रान्तौ हरियाणा-प्रदेशस्य महद् योगदानमासीत् येन आधुनिकं भारतं खाद्यान्न-सम्पन्नं जातम् । भारतस्य समृद्धतम-राज्येषु अन्यतमस्य हरियाणा-राज्यस्य, प्रतिव्यक्ति आयमानाधारेण इदं देशस्य द्वितीयं समृद्धतमं राज्यं वर्तते। एतदतिरिच्य, भारते सर्वाधिकाः ग्रामीणाः कोटि-पतयो धनिकाः अपि अस्मिन्नेव राज्ये सन्ति। हरियाणा-राज्यम् आर्थिकरूपेण दक्षिण-एशिया-द्वीपस्य विकसिततमं क्षेत्रं वर्तते, अपि चात्र, कृषि-विनिर्माणोद्योगः 1970-वर्षतः अनारतं वृद्धिमवाप्नोत्। यात्रिणां कारयानानां, द्विचक्रिका-वाहनानां, कृषित्र-डट्रैक्टर.-यानानाञ्च निर्माणे भारते हरियाणा-राज्यं सर्वोपरि वर्तते। भारते प्रतिव्यक्ति-निवेशाधारेण 2000-तमे वर्षे हरियाणा सर्वोपरि स्थानं भजते स्म ।

हरियाणा-राज्यस्य कला-परम्पराः बहुवर्णीया संस्कृतिश्च - हरियाणा-राज्यस्य सांस्कृतिक-जीवनेपि कृषेः अर्थव्यवस्थायाः विभिन्नानाम् अवसराणां समन्वितिः प्रतिबिम्बायते तथा चास्मिन् विराजते प्राचीन-भारतस्य परम्पराणां लोककथानाञ्च भाण्डारः। हरियाणा-प्रदेशस्य एका विशिष्टा भाषित-भाषास्ति, एतस्याञ्च स्थानिकानाम् आभाणकानां सहजं प्रचलनं प्रवर्तते । स्थानीयं लोकगीतं विशेषरूपेण...रागिणी. नृत्यञ्च स्वीयाकर्षक-शैली-कारणात् एतद्-राज्यस्य सांस्कृतिक-जीवनं सविशेषं प्रदर्शयतः । एते ओजोभरिते स्थानीय-संस्कृतेः विनोद-प्रियतया च संपृक्ते स्तः। वसन्ततौ आनन्दोल्लास-सम्भृते होलिका-पर्वणि जनाः परस्परं 'गुलाल'-इति रक्तचूर्णं स्नेहेन रागेण प्रेम्णा च प्रक्षिप्य आर्द्र-वर्णैः क्रीडन्ति अस्मिन् न कस्यचन वयसो वा सामाजिक-योग्यतायाः वा भेदो व्यवह्रियते । हरियाणा-राज्ये जन्माष्टमी - इति भगवतः श्रीकृष्णस्य जन्मदिनस्य विशिष्टं धार्मिकञ्च महत्त्वं वर्तते सूर्यग्रहणावसरे पवित्र-स्नानार्थं अशेष-देशात् लक्ष-लक्षशः श्रद्धालवः कुरुक्षेत्रं समायान्ति । अग्रोहा-(हिसारं निकषा)-पिहोवा-सहितानि अनेकानि प्राचीनानि तीर्थस्थलानि राज्येस्मिन् विराजन्ते । अग्रोहा- इति अग्रसेन-रूपेण आमान्यते, यो हि अग्रवाल-समुदायस्य, अस्य च उपजातीनां प्रमुखः पूर्वजः वा प्रवर्तकः विश्वस्यते । अत एव अग्रोहा-तीर्थं सम्पूर्णस्य अग्रवाल-समुदायस्य जन्मभूमिः अस्ति। भारतस्य व्यापारि-वर्गेषु प्रमुखोयं समुदायः साम्प्रतम् अशेष-देशे प्रसृतोस्ति ।

अग्रसेनस्य जन्मभूमेः सम्मानस्वरूपोयं समुदायः कतिपय-वर्षेभ्यः प्रतिष्ठापितवान्। वैदिक-सन्दर्भाणाम् अनुसारेण कला-ज्ञानयोः देव्याः, सरस्वत्याः सरितः. तट-स्थितं पिहोवा-तीर्थस्थलं पूर्वजानां श्राद्ध-हेतोः पिंडप्रदानाय महत्त्वाधायि-पवित्र-स्थलत्वेन आमान्यते। विभिन्न-देवतानां सत्पुरुषाणाञ्च स्मृतौ आयोज्यमानानि मेलकानि हरियाणा-संस्कृतेः महत्त्वपूर्णाङ्गत्वेन वर्तन्ते। अनेकेषु स्थानेषु पशु-मेलकान्यपि आयोज्यन्ते । क्षेत्रमेतत् उत्तम-जातेः दुग्ध-दायिनां पशूनां, विशेषेण च, महिषाणां कृषि-योग्यानां वर्ण-संकर-प्रजातीनां च पशूनां कृतेपि सुख्यातमस्ति। 'हवेलियां' - इति हरियाणा-प्रदेशस्य पारम्परिकाः पारिवारिकावासाः वास्तुशिल्पस्य सुन्दरता-हेतोः, विशेषेण च तेषां द्वाराणां संरचना-कारणात् अभिज्ञायन्ते। एतेषां 'हवेलियां - इति पारिवारिकावासानां द्वाराणाम् अभिकल्पनं ड्ोगुहग्हु. हस्तकौशलञ्च न केवलं विविधता-युक्तम्, अपि तु, एतेषु उत्कीर्णा विभिन्न-विषयाणां शृंखलापि विस्मयकारिणी वर्तते एते पारम्परिकाः पारिवारिकावासाः हरियाणा-राज्यस्य वीथीनां मध्ययुगीन-स्वरूपं सौन्दर्यञ्च विस्तारयन्ति । एतेषु भवनेषु बहवः आलिन्दाः चबूतरे. भवन्ति, ये नाम आवासीयानां सुरक्षायाः धार्मिकाणां न्यायालयीयानाञ्च कार्याणां कृते समुपयुज्यन्ते । एतानि भवनानि निज-स्वामिनां सामाजिक-स्थितिमपि संकेतयन्ति । एतेषु आलिन्देषु उत्कीर्णाः कलाकृतयः अस्य क्षेत्रस्य समृद्धं सांस्कृतिकं वंशानुगतं च रिक्थं स्मारयन्ति ।

संक्षेपेण वक्तुं शक्यते यत् एताभिः अनेक-प्रकारिकाभिः विशेषताभिः समन्वितस्य हरियाणा-राज्यस्य विषये एतादृक्-लघु-निबन्धः एव नैवास्ति अलम् विस्तृत-ग्रन्थस्य माध्यमेनैव वयं हरियाणा-राज्यस्य कलानां संस्कृतेः इतिहासस्य च विषये समग्रां सूचनामधिगन्तुं शक्नुमः।

## सांख्यदर्शनानुसारेण पुरुषस्वरूप विचारः

भारतीयेषु आस्तिकदर्शनेषु प्राचीनतमं भवति सांख्यदर्शनम्। सांख्यसूत्रकर्ता कपिलमुनिः। किन्तु सग्रन्थः इदानीं नोपलभ्यते। ईश्वरकृष्ण विरचिता सांख्यकारिका इदानीं उपलभ्यमानेषु सांख्यग्रन्थेषु प्राचीनतमा मुख्यतमा च। वाचस्पति मिश्र विरचिता तत्वकौमुदी अज्ञातकर्तृता, युक्ति दीपिका, गौढपादीयम् भाष्यं, माठरकृतावृत्तिः, शङ्कराचार्य विरचिता जयमङ्गला च अस्याः व्याख्यान ग्रन्थेषु मुख्या।गणनार्थकात् सम्यक्ज्ञान अर्थकात् वा संख्या शब्दात् मिष्पन्नोऽयं संख्या शब्दाः। अर्थद्वयमपि अत्र सङ्गच्छते। यतो हि अत्र पुरुषः, प्रकृतिः, महत् इत्यादिभिः पञ्चविंशति सांख्याख्यानि तत्वानि प्रतिपादितानि। एतेषां तत्वानां सम्यक् ज्ञानमेव अत्र दुखत्रय आत्यन्तिक निवृत्तिरूप कैवल्योपायत्वेन अमिहितम्। इदानीं पुरुषस्य स्वरूपविचारारम्भकद्वारेण पुरुषस्य अस्तित्व साधकानि कारणानि उच्चते। अत्र संघातपरार्थत्वात् इति। अचेतनानां पदार्थनां क्रमं अनुसृत्य सज्जीकरणमेव अथवा सङ्घातः इत्युच्चते। तादृशाः सर्वे अपि सङ्घातः सचेतनं परं उद्धि2य वर्तते। अव्यक्तादयः सर्वे सङ्घातः अपि परं सचेत नं उद्धिश्य प्रवर्तन्ते। सः परः पुरुषः एव इत्याशयः त्रिगुणादि विपयञ्यात् इत्यर्थे अव्यक्तादिनां सर्वेषां अपि तैगुण्यं प्रतिपादितम त्रैगुण्यस्य अभावः तु पुरुषे एव युज्यते इत्यर्थः। अधिष्ठानां इति अचेतनानां पदार्थानां प्रवृत्यर्थं सचेतनेन केनापि अधिष्ठानं आपेक्षितम्। यथा रथः अचेतनः सन् सारथिना अधिष्ठितः सन् चलति।

# शिक्षया विश्वहितम्

अविद्यया मृत्युं तीर्त्वा विद्यया अमृतमश्नुते इति वेदघोषः। सा विद्या एव प्रकृष्टा या मुक्तिं ददाति। उपनिषदनुसारेण परा अपरा इति विद्ये द्वे स्तः। यया विद्यया लैकिकं ज्ञानं जायते सा अपराविद्या। यया च अक्षरब्रह्मविषयकं ज्ञानं जायते सा परा विद्या। विद्या शब्दस्य अपरं नाम भवति शिक्षा इति।

**शिक्षायाः शाब्दिकार्थः-** शिक्ष् विद्योपादाने इति धातोः निष्पन्नः शिक्षा शब्दः। यस्य च अर्थः भवति शिक्षणम् अध्ययनं वा। शिक्षायाः अर्थः भवति व्यक्तेः आन्तरिकशक्तेः बहिरानयनं अथवा अन्तस्थशक्तीनां बहिर्नैष्क्रमणम्। पुनः शिक्षापदस्य निर्देशः, शिक्षणम्, प्रशिक्षणं, अनुशासनं, पालनपोषणं,संस्कृतिः इत्याद्यर्थाः च प्रतीयन्ते।

**शिक्षायाः व्यापकार्थः-** शिक्षायाः व्यापकार्थे शिक्षा नाम आजीवनं प्रचलन्ती काचित् गतिशीला प्रक्रिया भवति। व्यापकार्थे शिक्षायाः कार्यं जीवनपर्यन्तं प्रचलत् भवति। व्यक्तिः जन्मतः मृत्युपर्यन्तं किमपि किमपि शिक्षते। व्यक्तिः परिवारे , समाजे,बन्धुवर्गे, क्रीडोद्याने, आपणे, यात्रायां, उद्यानादिषु च क्रमशः शिक्षते। एवं शिक्षायाः क्षेत्रम् अतीव विस्तृतं भवति। आधुनिक शिक्षाशास्त्रिणां मते शिक्षा आगर्भात् चितापर्यन्तं प्रचलति इति।

**शिक्षायाः सङ्कुचितार्थः-** विद्यालये प्रदीयमाने शिक्षा इति अस्याः सङ्कुचितार्थः। अस्यामभिप्रायः यत् बालकः निश्चितयोजनानुसारं, निश्चितसमयानुगुणं, निश्चितपाठ्यक्रमानुसारं,निश्चितोद्देश्यमाधारीकृत्य निश्चितविधिमाश्रित्य निश्चितेभ्यः अध्यापकेभ्यः शिक्षां प्राप्नोति। अत्र सर्वमपि पूर्वयोजनानुगुणं भवति।

**शिक्षायाः विश्लेषणात्मकः अर्थः-** शिक्षायाः अर्थः विद्यालये प्रदीयमान ज्ञाने सीमिता न भवेत, परं जन्मसमयादारभ्य मृत्युपर्यन्तं प्रचाल्यमाना क्रिया भवति। शिक्षा बालकस्य जन्मजातशक्तेः विकासार्थं भवति।

**शिक्षायाः वास्तविकार्थः-** शिक्षायाः वास्तविकार्थः सर्वाङ्गीणविकासः भवति। अर्थात् शिक्षा तादृशी एका प्रक्रिया भवति यया मनुष्यस्य जन्मजातशक्तीनां स्वाभाविकसामञ्जस्यपूर्णविकासः च प्रस्फुटितः भवति। सर्वाङ्गीणविकासः इत्युक्ते शारीरिक, मानसिक,संवेगात्मक,सामाजिक,नैतिक,आध्यात्मिकश्च विकासः। एवं सर्वाङ्गीणविकासयुक्तः छात्रः समाजस्य सदस्यरूपेण समाजं प्रति राष्ट्रं प्रति च स्वदायित्वस्य निर्वहणे समर्थः भवति। पुनः तस्य व्यवहार विचार आचारादीनां विषये मर्यादानुगुणं परिवर्तनं संभवति। तेन समाजस्य देशस्य तथा विश्वपरिवारस्य च हितं भवति।

## जयतु संस्कृतम्



नित्यं स्वतन्त्रं प्रथमं च सत्य-
मार्त्येषु गेयं परमं पवित्रम् ।
वेदादिभूतं सुरभाषितत्वं
लीलाकरं संस्कृतमर्चयामि 1

आब्रह्मस्तम्भाय चराचराय
भूगोलमालाधरकोमलाय ।
नमोनमो भारतभूषणाय
श्रीसंस्कृताय प्रवराय तस्मै2

भाषानिर्जितहेमकुंकुमरसा वासान्विता कोमला
विख्याता सुरभारती सुरुचिरा काव्येषु वेदेषु च ।
धर्मे व्याकरणे पुराणसकले षड्दर्शने ज्योतिषे
विश्वे संस्कृतनामिता सुललिता भूयात्सतां श्रेयसे 3

सुरमुखरसभोक्त्रे भोगमोक्ष्यैकदात्रे
नवनिधिमखधात्रे स्वात्मविज्ञानगोप्त्रे ।
सरलमधुरवक्त्रे लोककल्याणकर्त्रे
विपुलसुखविधात्रे संस्कृताय प्रणामः 4

अम्लानपुष्पमकरन्दसुमिष्टसारं
सारं सुभोग्यपरमार्थनितान्तमुग्धम् ।
स्निग्धं प्रसन्नसृजनात्मकवेदमूलं
शीलं हि संस्कृतकुलं भुवि भावयामि5

**-नन्दप्रदीप्तकुमारः**

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**